"वाञ्छना गुरुसामग्री विभवो देहपाटवम् । सङ्घश्चतुर्विधो हर्षो व्रतारोपे गवेष्यते ॥१॥ वरकुसुमगंधअक्खय-
फलजलनेवज्जधूवदीवेहिं । अट्ठविहकम्ममहणी जिणपूआ अट्ठहा होई ॥ २ ॥" इत्याचार्यश्रीवर्द्धमानसूरिकृते
आचारदिनकरे गृहिधर्मपूर्वायने व्रतारोपसंस्कारकीर्त्तनो नाम पञ्चदश उदयः ॥ १५ ॥

---

## षोडश उदयः ।

### अथान्त्यसंस्कारविधिः ।

"श्राद्धो यथावद्वृत्तेन पालयित्वा निजं भवम् । कालधर्मे च संप्राप्ते कुर्यादाराधनां परम् ॥ १ ॥"
तस्य चार्यविधिः—"जिनकल्याणकस्थाने निर्जीवे स्थण्डिले शुचौ । अरण्ये वा स्वगृहे वा कार्यं आनशनो
विधिः ॥ १ ॥" तत्र शुभे स्थाने ग्लानस्य पर्यन्ताराधना विधेया । तथा अवश्यं भाविनि मरणे आसन्ने
तिथिवारर्क्षचन्द्रबलादि न विलोकयेत् । तत्र संघमीलनं गुरुर्ग्लानस्य यथा सम्यक्त्वारोपणे तथैव नंदिं
कुर्यात् । नवरं संलेहणाआराहणाभिलापेन सर्वं नन्दिदेववन्दनकायोत्सर्गादिविधिः स एव नवरं वैयावृत्त्यका-
रकायोत्सर्गानन्तरं आराधना, देवताराधनार्थं "करेमि काउस्सग्गं अन्नत्थऊससिएणं० जाव अप्पाणं
वोसिरामि" कायोत्सर्गः चतुर्विंशतिस्तवचतुष्टयचिन्तनं पारयित्वा आराधनास्तुतिकथनं । सा यथा—"यस्याः

सान्निध्यतो भव्या वाञ्छितार्थप्रसाधका। श्रीमदाराधनादेवी विघ्नव्रातापहास्तु वः ॥ १ ॥" शेषं पूर्ववत्। ततस्तेनैव विधिना सम्यक्त्वदण्डकोच्चारणं द्वादशव्रतोच्चारणं तथैव वासःक्षेपादिकायोत्सर्गादि तथैव संलेखना आराधनालापेन प्रदक्षिणा ग्लानस्य शक्त्यनुसारेण भवन्ति न वा। नवरं—"जावनियमपज्जवासामि स्थाने जाव जीवाए" इति वक्तव्यं। ततः क्षामणं सर्वजीवानां अपराधक्षमेति क्षामणा। ततः श्राद्धः परमेष्ठिमन्त्रोच्चारपूर्वं गुरुसंमुखं कृताञ्जलिर्भणति—खामेमि सव्वजीवे सव्वे जीवा खमंतु मे। मित्तीमे सव्वभूएसु वेरं मज्झ न केणई ॥ १ ॥" गुरुर्भणति—"खामेह, जो खमई तस्स अत्थि आराहणा जो न खमेइ तस्स नत्थि आराहणा ॥" ततः श्राद्धः क्षमाश्रमणपूर्वं भणति—"भयवं अणुजाणह," गुरुर्भणति—"अणुजाणामि" श्राद्धः परमेष्ठिमन्त्रपाठपूर्वं कथयति—"जे मए अणंतेणं भवब्भमणेणं पुढविकाइया आउकाइआ तेउकाइआ वाउकाइआ वणस्सईकाइआ एगिंदिआ सुहुमा वा बायरा वा पज्जत्ता वा अपज्जत्ता वा कोहेण वा माणेण वा मायाए वा लोहेण वा पंचेंदिअट्टेण वा रागेण वा दोसेण वा घाइआ वा पीडिआ वा मणेणं वायाए काएणं तस्स मिच्छामि दुक्कडं।" पुनः परमेष्ठिमन्त्रं पठित्वा—"जे मए अणंतेणं भवब्भमणेणं बेइंदिआ सुहुमा वा बायरा वा० शेषं पूर्ववत्। पुनः परमेष्ठि मंत्रं पठित्वा जेमए अणंतेणं भवब्भमणेणं तेइंदिआ सुहुमा वा बायरा वा० शेषंपूर्ववत्। पुनः परमेष्ठिमन्त्रं पठित्वा—"जे मए अणंतेणं भवब्भमणेणं चउरिंदिआ वा सुहुमा वा बायरा वा शेषं पूर्ववत्। पुनः परमेष्ठिमन्त्रपाठं पूर्वं कथ-

ठित्वा—"जं मए अणंतेणं भवब्भमणेणं पंचेंदिआ देवा वा मणुआ वा नेरइया वा तिरिक्खजोणिआ वा जलयरा वा थलयरा वा खयरा वा सन्निया वा असन्निया वा सुहुमा वा बायरा वा" शेषं पूर्ववत्। पुनः परमेष्ठिमन्त्रभणनपूर्वं श्राद्धः कथयति—"जं मए अणंतेणं भवब्भमणेणं अलिअं भणिअं कोहेण वा माणेण वा मायाए वा लोहेण वा पंचेंदिअट्टेण वा रागेण वा दोसेण वा मणेणं वायाए काएणं तस्स मिच्छामि दुक्कडं।" पुन परमेष्ठिमन्त्रं पठित्वा—"जं मए अणंतेणं भवब्भमणेणं अदिन्नं गहिअं कोहेण वा माणे०" शेषं पूर्ववत्। पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मए अणंतेणं भवब्भमणेणं दिव्वं माणुस्सं तेरिच्छं मेहुणं सेविअं कोहेण वा मा०" शेषं पूर्ववत्। पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मए अणंतेणं भवब्भमणेणं अट्ठारसपावठाणाइं कयाइं कोहेण वा मा०" शेषं पूर्ववत्। पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मे पुढविकायगयस्स सिलालेट्ठुसक्करा सन्हा वालुआ गेरिअसुवन्नाइं महाधाऊ रूवं शरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पावबट्टणे मिच्छत्तपोसणे ठाणेसंलग्गं तं निंदामि गरिहामि अप्पाणं वोसिरामि जं मे पुढविकायगस्ससिलालेट्ठु सक्करा सन्हा वा वालुआ गेरिअसुवन्नाइं महाधाउ रूवं सरीर० अरिहंतचेइएसु अरिहंतबिंबेसु धम्मट्ठाणेसु जंतुरक्खणट्ठाणेसु धम्मोवगरणेसु संलग्गं तं अणुमोआमि कल्लाणेणं अभिनिंदेमि।" पुनः परमेष्ठिमन्त्रं पठित्वा—"जं मे आउकायगयस्स जल करग मिहिआ उसा हिमकरतणु रूवं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पावबट्टणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि गरिहामि अप्पाणं वोसिरामि

पुनः परमेष्ठिमंत्रपठित्वा जं मे आऊकायगयस्स जल करग महिआ ऊसा हिम हरतणुरूवं सरीरं अरिहंतचेइ-एसु अरिहंतबिंबेसु धम्मठाणेसु जंतुरक्खणठाणेसु धम्मोवगरणेसु जिण ह्राणेसु तहादाहावहरणेसु सुलग्गं तं अणुमोआमि कल्लाणेणं अभिनंदेमि । पुनः परमेष्ठिमंत्रं पठित्वा. जं मे तेउकायगयस्स अगणि इंगाल मम्मुर जाला अलाय विज्जु उक्का तेअरूपं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववड्ढणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि गरिहामि वोसिरामि. जं मे तेउकायगयस्स अगणि इंगाल मम्मुर जाला अलाअ विज्जु उक्का तेअरूवं सरीरं सीआ वहारे जिणपूआधूवकरणे नेवेद्यपाए छुहाहरणा हारपाए संलग्गं तं य अणुमोएमि कल्लाणेणं. अभिनंदेमि । पुनः परमेष्ठिमंत्रं पठित्वा जं मे वाउकायगयस्स वाउ झंझासासरूवं सरीरं. पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववड्ढणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि. गरिहामि वोसिरामि जम्मे वाऊकायगयस्स वाउझंझासासरूवं सरीरं पाणिरक्खणे पाणीजीवणे साहूण वेयावच्चे धम्मावहारे संलग्गं तं अणुमोएमि कल्लाणेणं अभिनंदेमि । पुनः परमेष्ठिमंत्रं पठित्वा जम्मे वणस्सइकाय गयस्स मूल कठ छल्लि पत्त पुप्फ फल बीअ रस निज्झा सरूवं सरीरं पाणिवहे पाणिसंघट्टणे पाणिपीडणे पाववड्ढणे मिच्छत्तपोसणे संलग्गं तं निंदामि गरिहामि अप्पाणं वोसिरामि जम्मे वणस्सइकायगयस्स मूल कठ छल्लि पत्त पुप्फ फल बीअ रस निज्झासरूवं सरीरं बुहाहरणेसु अरिहंतचेइअपूयणेसु धम्मठाणेसु नेवेद्यकरणेसु जंतुरक्खणेसु. संलग्गं तं अणुमोएमि कल्लाणेणं अभिनंदेमि । पुनः परमेष्ठिमंत्रं पठित्वा जम्मे तसकायगयस्स. रस रत्त

मंसमेअ अट्ठिमज्जा सुक्क चम्म रोम नह नसारूवं सरीरं पाणिवहे पाणिसंवट्टणे पाणिपीडणे पावचट्टणे मिच्छत्तपोसणे ठाणे संलग्गं तं निंदामि गरिहामि वोसिरामि. जम्मे तसकायगयस्स रस रत्त मंस मेअ अट्ठि मज्जा सुक्क चम्मं रोम नह नसा रूवं सरीरं अरिहंतचेइएसु अरिहंतबिंबेसु धम्मट्ठाणेसु जंतुरक्खण. ठाणेसु धम्मोवगरणेसु संलग्गं तं अणुमोएमि कल्लाणेणं अभिनंदेमि।" पुनः परमेष्ठिमंत्रं पठित्वा— "जं मए इत्थ भवे मणेणं वायाए काएणं दुट्ठं चिंतिअं दुट्ठं भासियं दुट्ठं कयं तं निंदामि गरिहामि अप्पाणं वोसिरामि, जं मए इत्थ भवे मणेणं वायाए कायेणं सुट्ठु चिंतिअं सुट्ठु भासिअं सुट्ठु कयं तं अणुमोएमि कल्लाणेणं अभिनंदेमि।" अत्र पूर्वं समारोपितसम्यक्त्वव्रतस्यापि पुनः सम्यक्त्वव्रतारोपो विधेयः। अनारोपितसम्यक्त्वव्रतस्यापि सम्यक्त्वव्रतारोपः प्रान्ते विधेय एव। यस्य व्रतारोपः पूर्वं कृतो भवति तस्यात्र समये चतुर्विंशत्युत्तरशतातीचारालोचनं च। तत्र चातिचारा आवश्यकोदये कथयिष्यन्ते। तत आलोचनाविधिर्विधेयः सोऽपि प्रायश्चित्तविध्युदयादवसेयः। ततो गुरुः सर्वसङ्घसहितो वासाक्षतादि ग्लानशिरसि निक्षिपेत्। इत्यन्त्यसंस्कारे आराधनाविधिः। ततः क्षामणं। ग्लानः क्षमाश्रमणं परमेष्ठिमंत्रपाठपूर्वं भणति—"आयरिअ उवज्झाए सीसे साहम्मीए कुलगणेअ जे मे केइ कसाया सव्वे तिविहेण खामेमि सव्वस्स समणसंघस्स भगवओ अंजलिं करिअ सीसे सव्वं खमावइत्ता खमामि सव्वस्स अहयंपि। भगवं जं मए चउगइगयणं देवा तिरिआ मणुस्सा नेरइआ चउकसाउवगएणं पंचेंदिअवसट्टेणं इहंमि भवे अ-

न्नेसु वा भवगहणेसु मणेणं वायाए काएणं दूमिआ संताविआ अभिताविआ तस्स मिच्छामि दुक्कडं । तेहिं अहं अभिओ संताविओ अभिहउत्तमंहंपि खमामि । ततो गुरुणा अस्य गाथात्रयस्य स दण्डकस्य विस्तरव्याख्यानं करोति । ततो ग्लानो गुरुसाधुसाध्वीश्रावकश्राविकाः प्रत्येकं क्षमयति । अत्र गुरुभ्यो वस्त्रादिदानं सङ्घपूजा च । इत्यन्तसंस्कारे क्षामणविधिः । अथासन्ने मृत्युकाले सर्वचैत्येषु ग्लानः पुत्रादिभिः महापूजास्नपनध्वजारोपादि कारयेत्[१] । चैत्यधर्मस्थानादिषु वित्तविनियोगं कारयेत् । ततः परमेष्ठिमंत्रोच्चारपूर्वकं पठेत्—"जो मे जाणंतु जिणा अवराहा जेसु जेसु ठाणेसु । तेहं आलोएमि उवट्ठिओ सव्वकालंपि ॥ १ ॥ छउमत्थो मूढमणो कित्तिअमत्तंपि संभरइ जीवो । जं जं न संभरामि अहं मिच्छामि दुक्कडं तस्स ॥ २ ॥ जं जं मणेण बद्धं जं जं वायाइभासिअं किंचि । जं जं काएण कयं मिच्छामि दुक्कडं तस्स ॥ ३ ॥ खामेमि सव्वजीवे सव्वे जीवा खमंतु मे । मित्ती मे सव्वभूएसु वेरं मज्झ न केणइ ॥४॥" इति ग्लानपाठः । ततो नमस्कारत्रयपाठपूर्वं भणति—"चत्तारि मंगलं अरहंता मंगलं सिद्धा मंगलं साहु मंगलं केवलिपन्नत्तो धम्मो मंगलं । चत्तारि लोगुत्तमा अरहंता लोगुत्तमा सिद्धा लोगुत्तमा साहु लोगुत्तमा केवलिपन्नत्तो धम्मो लोगुत्तमो । चत्तारि सरणं पवज्जामि अरहंते सरणं पवज्जामि सिद्धे सरणं पवज्जामि साहू सरणं पवज्जामि केवलिपन्नत्तं धम्मं सरणं पवज्जामि" इति पठेत् । ततो गुरुवाक्येन अष्टादशपापस्थानकव्युत्सर्जनं यथा—"सव्वं पाणाइ-

१ कारयतीत्यर्थः । यद्वा गुरुणासह करोतीत्यर्थः नानाधिकारानुरोधेन व्याख्येयोयं ग्रन्थइति संदिग्धप्रयोगकरणेनानु मीयते.

वायं पच्चक्खामि सव्वं मुसावायं पच्चक्खामि सव्वं अदिन्नादाणं प० सव्वं मेहुणं प० सव्वं परिग्गहं प० सव्वं राईभोअणं प० सव्वं कोहं प० सव्वं माणं प० सव्वं मायं प० सव्वं लोहं प० सव्वं पिज्जं प० सव्वं दोसं कलहं अब्भक्खाणं अरई रई पेसुन्नं परपरिवायं मायामोसं मिच्छादंसणसल्लं इच्चेइआइं अट्ठारसपावठाणाइं दुविहं तिविहेणं वोसिरामि अपच्छिममि ऊसासे तिविहं तिविहेणं वोसिरामि।" ततो गुरुर्गीतार्थः श्रीयोगशास्त्रपञ्चमप्रकाशकथितं कालप्रदीपादिशादिशास्त्रकथितं च ग्लानस्यायुःक्षयं विज्ञाय सङ्घस्य तत्संबन्धिनां राजादेरनुमतिं गृहीत्वा अनशनमुच्चारयेत्। ग्लानः शक्रस्तवं पठित्वा परमेष्ठिमंत्रं त्रिः पठित्वा गुरुमुखादुच्चरति, यथा—"भवचरिमं पच्चक्खामि तिविहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहस्सागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरामि।" इति सागारानशनं। अन्त्यमुहूर्त्ते अनागारमनशनं यथा—"भवचरिमं निरागारं पच्चक्खामि सव्वं असणं सव्वं पाणं सव्वं खाइमं अन्नत्थणाभोगेणं सहस्सागारेणं अइयं निंदामि पडिपुन्नं संवरेमि अणागयं पच्चक्खामि, अरिहंतसक्खियं सिद्धसक्खिअं साहूसक्खियं देवसक्खियं गुरुसक्खियं अप्पसक्खिअं वोसिरामि, जे मे हुज्ज पमाओ इमस्स देहस्स इमाइ वेलाए आहारमुवहिं देहं तिविहं तिविहेणं वोसिरियं, गुरुर्निस्थारग पारगो होहि" इति भणन् वासाक्षतादि ग्लानसंमुखं ससङ्घः क्षिपति शान्त्यर्थं "अट्ठावयम्मिउसहो" इत्यादिस्तुतिपाठः पठनीयः। "चउणं जम्मणभूमी" इत्यादिस्तवपाठः। गुरुर्निरन्तरं ग्लानाग्रे त्रिभुवनचैत्यव्याख्यानं अनित्यादिद्वादशभागनाव्या-

ख्यानं अनादिभवस्थितिव्याख्यानं अनशनफलव्याख्यानं सर्वदा करोति। सङ्घो गीतनृत्याद्युत्सवं करोति। ग्लानो जीवितमरणेच्छां परित्यज्य समाधिना परितिष्ठति। ततोऽन्तर्मुहूर्त्ते समायाते ग्लानः "सव्वं आहारं सव्वं देहं सव्वं उवहिं वोसिरामि" इति भणति। ततः प्रान्ते ग्लानः पञ्चपरमेष्ठिस्मरणश्रवणयुक्तः शरीरं त्यजति। इत्यन्तसंस्कारे अनशनविधिः। मरणकाले ग्लानः कुशशय्यायां स्थाप्यो जन्ममरणे भूमावेव इति व्यवहारः अथ सर्वभावभोक्तरि कर्मयोक्तरि चेतनारूपे जीवे गते अजीवपुद्गलस्य तच्छरीरस्य सनाथताख्यापनार्थं तत्सुतादीनां कृतार्थं तीर्थं संस्कारविधिरुच्यते—स यथा ब्राह्मणस्य सर्वस्य शिखावर्जितं शिरः कूर्चमुण्डनं केचित् क्षत्रियवैश्ययोरपि वदन्ति। तथा शवसंस्कारः सर्वैर्पि स्ववर्णज्ञातिभिर्विधेयः तत्स्पर्शो विधेयोऽन्यवर्णज्ञातिभिः। ततो गन्धतैलादिभिः शवं सुष्ठुगन्धोदकैश्च स्नपयेत्। गन्धैः कुङ्कुमादिभिर्विलेपयेत् मालाभिरर्चयेत् स्वस्वकुलोचितैर्वस्त्राभरणैर्मण्डनैर्भूषयेत्। शूद्रप्रकृतीनां सर्वथा न मुण्डनं। ततो नवकल्पितकाष्ठशय्यायां निष्पादितायां शुकसंस्तीर्णायां सुवस्त्रच्छन्नायां शवं स्थापयेत् सह शय्योपकरणैः। अत्रास्य गृहिणो मृत्युनक्षत्रस्य नक्षत्रपुत्रकविधानं कुशसूत्रादिभिर्यतिवद् ज्ञेयं। नवरं कुशपुत्रका गृहस्थवेषधराः कार्याः वर्णानुसारेण तदुपरि नानाविधवस्त्रसुवर्णमणिविचित्रं वस्त्रकृतं प्रासादं स्थापयेत्। ततः स्वज्ञातीयाश्चत्वारः परिजनैः सह स्कन्धोढं शवं श्मशानं नयन्ति। तत्रोत्तरभागस्थशिरसं शवं पुत्रादयश्चितामारोप्य वह्निना संस्कुर्वन्ति। "अनन्नभोजिबालानां भूमिसंस्कार इष्यते। गृहिणामग्निसंस्कारः सर्वेषा-

मन्नभोजिनाम् ॥१॥" तत्र प्रेतप्रतिग्राहिभ्यो दानं ददति । ततः सर्वेऽपि स्नानं विधाय अनेन मार्गेण स्वगृहमायान्ति । तत्र तृतीयदिने चिताभस्म पुत्रादयो नद्यां प्रवाहयन्ति तदस्थीनि तीर्थेषु स्थापयन्ति । ततस्तद्दिने स्नात्वा शोकापनोदं कुर्वन्ति । चैत्येषु गत्वा सपरिजना जिनबिंबमस्पृशन्तश्चैत्यवन्दनं कुर्वन्ति । ततो धर्मागारेष्वागत्य गुरून् नमस्कुर्वन्ति । गुरवोऽपि संसारानित्यतारूपां धर्मव्याख्यां कुर्वन्ति । ततः सर्वेऽपि स्वस्वकार्यं साधयन्ति । अन्त्याराधनमारभ्य शोकापनोदपर्यन्तं न मुहूर्त्ताद्यवलोकनं अवश्यकर्त्तव्यत्वात् । मृतस्नात्रकरणं वर्जयेदेषु धिष्ण्येषु—"प्रेतक्रिया न कर्त्तव्या यमले च त्रिपुष्करे । आर्द्रामूलानुराधासुमिश्रक्रूरध्रुवेषु च ॥ १ ॥ धनिष्ठापञ्चके वर्ज्यास्तृणकाष्ठादिसङ्ग्रहाः । शय्यादक्षिणदिग्यात्रामृतकार्यगृहोद्यमाः ॥ २ ॥" एषु कर्त्तव्यं च—"रेवती श्रवणसार्पवालिनीतिष्यहस्तपवनेन्दुभेषु च । सौम्यवाक्पतिशनैश्चरेष्वपि प्रेतकर्म विबुधैर्निदिश्यते ॥ १ ॥ स्वस्ववर्णानुसारेण सूतकं मृतजातयोः । सदृशं गर्भपाते तु सूतकं स्याद्दिनत्रयम् ॥ २ ॥ यतः–अन्यवंशे समुद्भूते मृते जातेऽथ तद्गृहे । परिणीतसुतायाश्च सूतकान्नाशने तथा ॥ ३ ॥ एतेषु चैव सर्वेषु सूतकं स्याद्दिनत्रयम् । सूतकं सूतकं हन्ति जातं जातं मृतं मृतम् ॥ ४ ॥ अनन्नभोजिबालस्य सूतकं स्याद्दिनत्रयम् । अनष्टवार्षिकस्यापि त्रिभागोनं च सूतकम् ॥ ५ ॥ स्वस्ववर्णानुसारेण सूतकान्ते जिनस्नपनं साधर्मिकवात्सल्यं च ततः कल्याणं । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे गृहिधर्मप्रूवायने अन्त्यसंस्कारकीर्त्तनो नाम षोडश उदयः समाप्तः ॥ १६ ॥

અગાઉ જણાવી ગયા પ્રમાણે ગૃહસ્થાવસ્થાના ૧૬ સંસ્કાર પૈકી વ્રતારોપ સિવાયના પન્નર સંસ્કારો—ગૃહસ્થગુરુ (ગૃહ્યગુરુ) કે જેઓ યતિ–ક્ષુલ્લકપણે ઓળખાતા હતા, તેઓએ વિધિપૂર્વક કરાવવાના હોય છે. આ ગૃહસ્થગુરુને પણ વિધિ કરાવવા માટે તે પ્રકારની યોગ્યતા મેળવવાની હોય છે તેની પણ વિધિ–હવેના બે પ્રકરણો–ઉદયમાં આપવામાં આવી છે. આ યતિ–ક્ષુલ્લકપણે ચુસ્ત બ્રહ્મચર્ય પાળી મહાવ્રતોનું પણ પાલન કરવાનું હોય છે. આ એક પ્રકારની પરીક્ષા છે. કે જે પ્રવ્રજ્યા–દીક્ષાને માટેનું પ્રમાણપત્ર આપે છે. વૈરાગ્યવાસિત થઈને સંયમમાર્ગે આત્માનો વિકાસ કરવામાં ઉપયોગી છે. જો કે અત્યારના વાતાવરણમાં આ પ્રથા લુપ્તપ્રાયઃ થઈ છે. કોઈક ક્ષેત્રોમાં યતિઓ–કે જેઓને શ્રીપૂજ્ય પણ કહેવાય છે તેઓ પણ ઉપરના નિયમોને બંધનકર્તા હોય તેવું લાગતું નથી.

પ્રવ્રજ્યા માટેની બાબતો નિયમો જૈનશાસને ઘણાં જ સરસ રીતે બતાવ્યા છે. જે આત્માઓ પૂર્વજન્મમાં આરાધના કરીને આવેલાં હોય છે. તેઓને આ જન્મમાં વ્રતપાલન ઘણાં સુલભ થાય છે. અને એટલે જેઓ બાલ્યાવસ્થામાં વૈરાગ્યવાસિત હોય છે તેને માટેની લઘુતમ મર્યાદા આઠ વર્ષની બાંધી છે, એટલે આઠ વર્ષની ઉમરે પણ દીક્ષા ગ્રહણ કરી શકે છે. તેઓ સ્વાભાવિક રીતે જ ઉત્તમ રીતે સંયમપાલન કરે છે. કેટલાક આવા મહાપુરુષોનો ઉલ્લેખ અસ્થાને નહિ ગણાય. પ્રવ્રજ્યા પ્રકરણમાં તે જણાવીશું.

## सप्तदश उदयः।

### अथ यत्याचार आरभ्यते ।

विषमो दुष्पालो यत्याचारः । यदुक्तं—"सा पुण दुप्परिअल्ला पुरिसाण सया विवेगरहियाणं । वोढव्वाइं जम्हा पंचेव महव्वयवयाइं ॥ १ ॥ राई भोअण विरई निम्ममत्तं स एवि देहंमि । पिंडो उग्गम उप्पायणे सणाए सया सुद्धो ॥ २ ॥ इरियाइं पंचहिं समईहिं तीहिंगुत्तीहिं तवविहाणम्मि । निच्चुज्जुत्तो अममो अकिं-चणो गुणसया वासो ॥ ३ ॥ मासाई आइ पडिमा अणेगरूवा अभिग्गहा बहवे । दव्वे खित्ताणुगया काले भावे अ वोधव्वा ॥ ४ ॥ जावज्जीवममज्जण–मणवरियं भूमिसयणमुद्दिट्ठं । केसुद्धरणं च तहा निप्पडिकम्म-त्तणमपुव्वं ॥ ५ ॥ गुरुकुलवासो अ सया खुहापिवासाइयाय सोढव्वा । बावीसं च परीसहा तहेव उव-सग्गदिव्वाइं ॥ ६ ॥ लद्धाविलद्ध वित्ती सीलंगाणं च तह सहस्साइं । अट्ठारसेव सययं वोधव्वा आणुपुव्वीए ॥ ७ ॥ तरिअव्वो अ समुद्दो बाहाहि इमो महल्लकल्लोलो । निस्सायवालुयाए चावेअव्वो सया कवलो ॥८॥ चंक्कमिअव्वं निसिअग्गखग्गधाराइ अप्पमत्तेणं । पायव्वाइसहेलं हुअवहज्जालावली सययं ॥ ९ ॥ गंगा पडिसोएणं तोलणिअव्वो तुलाइ सुरसेलो । जइअव्वं तह एगागिणा विभीसारिदुट्ठवलं ॥ १० ॥ राहावे-

हविणम्मि अचक्कट्टि अचक्कठिअलक्खमज्जपुत्तलिआ। विंधेअव्वावस्सं उवसग्गपरिसहे जेउं ॥ ११ ॥ तिहुयणजयप्पडागा अगिहियपुव्वा तहेव गहियव्वा। इअएवमाइसाहुण दुक्करा होइ पवज्जा ॥ १२ ॥" ततो व्रते सर्वत्रापि ब्रह्मचर्यमेव दुष्करं यदुक्तमागमे—"अक्खाणरसणी कम्माणमोहणी तह वयाण बंभवयं। गुत्तीणं य मणगुत्ती चउरा कट्ठेण जिप्पंति ॥ १ ॥" परसमयेऽपि—"ब्रह्मचर्यं भवेन्मूलं सर्वेषां व्रतकर्मणाम्। ब्रह्मचर्येण भग्नेन व्रतं सर्वं निरर्थकम् ॥ १ ॥" दुष्करं ब्रह्मव्रतं यदुक्तं, गाथा—"दीसंते अणेगे उग्गखग्गसमरंगणे महाविसमे। भग्गे विसयलसिन्ने गंभीरा दायिणो धीरा ॥ १ ॥ दिसंति सिंहपोरस निम्महणा दलिअमइगलगणावि। कंदप्पदप्पदलणे विरलच्चिअ केवि सप्पुरिसा ॥ २ ॥" ततः पालितशुद्धसम्यक्त्वद्वादशव्रताचारः कृतचैत्यनिर्मापणजिनबिंबजिनागमचतुर्विधसङ्घविषयबहुद्रव्यव्ययः संपूर्णभोगाभिलाषः परमवैराग्यवासनः संपूर्णगार्हस्थ्यमनोरथः शान्तरसनिमग्नः कुलवृद्धसुतपत्नीस्वाम्यादिभिरनुज्ञातः प्रव्रज्याग्रहणोत्सुकः श्राद्धो ब्रह्मव्रताय योग्यो भवति। तस्य चायं विधिः—प्रथमं शान्तिकं पौष्टिकं गुरुपूजा सङ्घपूजा च। ततः प्रव्रज्योपयोगिनि लग्नदिने श्राद्धो मुण्डितशीर्षः शिखासूत्रधारी महोत्सवेन विवाहोत्सवसदृशेन यथोक्तगुणगुरुसमीपे व्रजेत्। तत्र गुरुर्नन्दिपूर्वकं सम्यक्त्वसामायिकदेशविरतिसामायिकारोपणं पूर्ववत्

१ शिष्योत्सुकैरिशष्यसमूहेन स्थविरत्वमभिलषद्भिरसाधुसत्तमैरिदं विशेषणमभ्यसनीयम्। एतादृशशिष्यानुपलब्धेरसाधूसच्छेदाद्धर्मोच्छेदः स्यादिति तु न शङ्कनीयम् अयोग्यसाधुसत्त्वेऽपि तदुच्छेदसंभवात्.

कुर्यात्। चैत्यवन्दनं दण्डकोच्चारक्षमाश्रमणादि सर्वं पूर्ववत्। ततस्तां सर्वां पूर्वोक्तक्रियां निर्वर्त्य गुरुः श्राद्धस्य परमेष्ठिमंत्रत्रयभणनपूर्वमिति दण्डकमुच्चारयेत्—"करेमि भंते सामाइयं सावज्जं जोगं पच्चक्खामि जावनियमं पज्जूवासामि दुविहं तिविहेणं मणेण वायाए कायेणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि सव्वं मेहुणं पच्चक्खामि जावनियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करे० शेषं पूर्ववत्। इत्युक्त्वा "नित्थारग पारगो होहि" इति भणन् गुरुर्वासान् क्षिपतिस सङ्घः। ततो गुरुर्निषद्यासीनः पुरःस्थस्य ब्रह्मचारिणं उपदेशं ददाति-यथा—"स्त्रीपण्डपशुमद्वेश्यासनकुड्यान्तरोज्झनात्। सरागस्त्रीकथात्यागात् प्रोज्झितस्मृतिवर्जनात् ॥ १ ॥ स्त्रीरम्याङ्गेक्षणस्वाङ्गसंस्कारपरिवर्जनात्। प्रणीतात्यशनत्यागादब्रह्मचर्यं तु भावयेत् ॥२॥ न कार्यो भवता स्त्रीभिः संभाषो रागसंयुतः। शयनासनकार्यादि न कार्यं गृहिवेश्मसु ॥ ३ ॥ अन्यनिन्दोपहासौ च वर्जनीयौ निरन्तरम्। धार्यं सदा त्वया मौनं स्वाध्यायकरणं विना ॥ ४ ॥ भोक्तव्यमन्यगेहेषु प्रायः सचित्तवर्जनम्। धार्यं कौपीनमनिशं मुञ्जमेखलयान्वितम् ॥ ५ ॥ नैव कार्योऽङ्गसंस्कारो न धार्यं भूषणादि च। एकं प्रच्छादनं मुक्त्वा न धार्यमपरं बहु ॥ ६ ॥ मौनं द्विरावश्यकं च स्त्रीसङ्गस्य विवर्जनम्। जिनार्चनं त्रिकालं च कुर्याद्वर्षत्रयावधि ॥ ७ ॥ सचित्तादिपरित्यागो नास्ति प्रायो व्रतेऽत्र च। केवलं ब्रह्मचर्यस्य धारणं परमिष्यते ॥ ८ ॥" इत्युक्त्वा वासान् क्षिपति। ततो ब्रह्मचारी मौनी शुभध्यानरतो वर्षत्रयं विहरति। तत्र वर्षत्रयावधिपालितत्रिकरणशुद्धि-

ब्रह्मचर्यः क्षुल्लत्वप्रव्रज्यावादाति । खण्डितव्रतस्तु पुनर्गार्हस्थ्यमुपगच्छति । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायने ब्रह्मव्रतकीर्त्तनो नाम सप्तदश उदयः ॥ १७ ॥

---

## अष्टादश उदयः ।

### अथ क्षुल्लकत्वविधिः ।

वर्षत्रयं पालितत्रिकरणशुद्धिब्रह्मव्रतः शान्तरसप्रकृष्टबलतुलितशीलाङ्गभारः दीक्षां जिघृक्षुः ब्रह्मचारी क्षुल्लकत्वमर्हति । न केवलं पालितत्रिकरणशुद्धब्रह्मव्रतोऽप्यतुलितान्यचतुर्महाव्रतः प्रव्रज्यापालने समर्थो भवति । संयमपालनं हि ब्रह्मचर्यपालनं चतुर्महाव्रतपालनं विधाय कालक्रमेण सुकरं भवति । भगवानर्हन्नपि प्रव्रजितुकामः सांवत्सरिकदानव्याक्षेपेन संवत्सरं महाव्रतपालनातुलनां करोति । ततो ब्रह्मव्रतपालनानन्तरं क्षुल्लकदीक्षा, यथा—पालितत्रिकरणशुद्धब्रह्मचर्यो वर्षत्रयान्ते क्षुल्लकत्वं गृह्णाति । तत्र यथा पूर्वोक्तगुणगुरुसमीपे दीक्षोपयोगितिथिवारर्क्षलग्नेषु शिष्यः कृतस्नानो मुण्डितशीर्षः शिखाधारी सोपवीतः निषद्यानिषण्णस्य गुरोः समीपे धृतमुखवस्त्रिकः प्रतिक्रान्तेर्यापथः क्षमाश्रमणपूर्वं भणति—'भयवं इच्छाकारेण तुब्भे अम्हं पंचमहव्वयाणं अवहिआरोपणं उद्दिसह । गुरुर्भणति—"आदिसामि ।" ततः क्षुल्लकत्वालापेन

नन्दिवासक्षेपचैत्यवन्दनवन्दनवन्दनककायोत्सर्गयुक्तिः सैव व्रतारोपसदृशी पूर्ववत् । ततो दण्डकोच्चारकाले शिष्यो गुरोः क्षमाश्रमणपूर्वं भणति—"भयवं इच्छाकारेण तुब्भे अम्हं पंचमहव्वयाणं अवहिआरोवणं समुद्दिसह ।" गुरुर्भणति "समुद्दिसामि ।" ततो नमस्कारत्रयपाठः । पूर्वं शिष्यो दण्डकमुच्चरति, यथा—"करेमि भंते सामाइयं सव्वं सावज्जजोगं पच्चक्खामि जावनियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।" पुनरपि परमेष्ठिमन्त्रं त्रिः पठित्वा—"सव्वं पाणाईवायं सव्वं मुसावायं सव्वं अदिन्नादाणं सव्वं मेहूणं सव्वं परिग्गहं सव्वं राईभोअणं पच्चक्खामि जावनियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।" ततः शिष्यः क्षमाश्रमणपूर्वं भणति, "भयवं इच्छाकारेण तुब्भे अम्हं पंचमहव्वय अवहिपालणं अणुन्नवेह ॥" गुरुर्भणति, "अणुन्नवेमि ॥" अनया रीत्या उद्देशसमुद्देशानुज्ञासु षट् क्षमाश्रमणवन्दनककायोत्सर्गादि पूर्वोक्तरीत्या त्रिवेलं करणीयं । नन्द्यन्ते गुरुः स्वयमभिमन्त्रितवासान् गृहीत्वा सङ्घकरे च दत्वा भणति—"ब्रह्मचर्यं पालयित्वा वत्स क्षुल्लकतां गतः । महाव्रतानि पश्चापि पालयेरवधिं कृतम् ॥ १ ॥ मुनिवद्विहरेर्नित्यं शिक्षासूत्रसमन्वितः । शुद्धमन्नं च निर्दोषं भोज्यं मुनिभिराहृतम् ॥ २ ॥ गृहिवेश्मसु गत्वा वा भोज्यं दोषविवर्जितम् । सचित्तवस्तुनो नैव कार्ये स्पर्शनभोजने ॥ ३ ॥ चैत्यप्रणामः साधूनां पर्युपास्तिरनुत्तरा । आवश्यकं

छिवेलं च स्वाध्यायः सर्वदा पुनः ॥ ४ ॥ ब्रह्मचारिसमानस्तु वेषो ब्रह्मणि गुप्तयः । शान्तेन भवतैतत्तु विधेयं मुनिवत्सदा ॥ ५ ॥ शिशूनां साधुसाध्वीनां प्रणामो न प्रणामनम् । सिद्धान्तमेकं संत्यज्य धर्मशास्त्रनियोजनम् ॥ ६ ॥ विधेया गृहिसंस्कारा व्रतारोपविवर्जिताः । शान्तिकं पौष्टिकं चैव प्रतिष्ठां च समाचरेत् ॥७॥" इत्युक्त्वा ससङ्घः सूरिः "नित्थारपारगो होहि" इति भणन् तन्मस्तके वासान् क्षिपति । ततः क्षुल्लकोऽपि गुरूपदिष्टया मुनिरीत्या धर्मशास्त्रव्याख्यानं कुर्वन् विहरति वर्षत्रयमवधिः । ततः संयमस्य यथोक्तपालने प्रव्रज्या व्रतभङ्गे पुनर्गार्हस्थ्यं । इत्याचार्यश्रीवर्द्धमानसूरिकृते आचारदिनकरे यतिधर्मोत्तरायने क्षुल्लकत्वसंकीर्त्तनो नाम अष्टादश उदयः ॥ १८ ॥

---

## एकोनविंश उदयः ।

### अथ प्रव्रज्याविधिः ।

सा च प्रवचने दीक्षाग्रहणनिषिद्धानां न भवति । ते च दीक्षानिषिद्धा यथा—"अट्ठारस पुरिसेसु वीसं इत्थीसु दस नपुंसेसु । पव्वायणा अणरिहा तह वियलंगसरूवा य ॥ १ ॥" अष्टादशभेदाः पुरुषाः पुरुषेषु विंशतिभेदाः स्त्रियः स्त्रीषुः दशभेदाः षण्डा नपुंसकेषु तथा विकलाङ्गस्वरूपा एते न प्रव्रज्यामर्हन्ति । परस-

अथेऽपि—"जात्यङ्गदोषसंपन्ना दूषिताः कुलकर्मभिः । शूद्राः काराश्च संन्यासं नार्हन्ति मनुवाक्यतः ॥ १ ॥" एते परसमयोक्तजनदोषा अपि प्रवचनोक्तदोषेष्वन्तर्दधेति पुरुषेष्वष्टादश दोषा यथा—"बाले १ वुड्ढे २ नपुंसे अ ३ कीवे ४ जड्डे य ५ वाहिए ६ । तेणे ७ रायावरागी अ ८ उम्मत्ते अ ९ अदंसणे १० ॥ १ ॥ दासे ११ दुट्ठे १२ अ मूढे अ १३ अणत्ते १४ डुंगिगई अ उवद्धए अ । १६ भयए १७ सेहनिप्फेडिआइ अ १८ ॥२॥" बालो वर्षाष्टकादर्वाक् १ वृद्धः क्षीणेन्द्रियकर्मेन्द्रियकृत्यः चतुर्थीमवस्थां प्राप्तः स संस्तारकदीक्षामेवार्हति न प्रव्रज्यां २ नपुंसकं तृतीयाप्रकृतिः पण्ड इत्यर्थः ३ क्लीबः यः स्त्रियाभ्यर्थितः कामाभिलापासहः सहसा ४ जड्डः अजङ्गमकरचरणोऽतिस्थूलः ५ व्याधितः सदा रोगी स्वाध्यायावश्यकभिक्षाटनाद्यक्षमः ६ स्तेनः चोरो राजादिनिग्रहभयाद्व्रताकाङ्क्षी ७ राजापरागी कृतनृपापराधः ८ उन्मत्तो भूतवातादिदोषेण वैकल्यमाप्तः ९ अदर्शनो मिथ्यात्वाभिलापेण सम्यक्त्ववर्जितः अन्धो वा १० दासो मूल्यक्रीतः ११ दुष्टः कषायविषयदूषितः १२ मूढः कृत्याकृत्यविचाररहितः जिनादिनामस्मरणेऽपि निष्प्रज्ञः १३ ऋणार्तः सर्वजनस्य ऋणेन व्याकुलः १४ डुंगितो द्विधा जातिडुङ्गितः कर्मडुङ्गितश्च । जातिडुङ्गितो नीचजातिः कारुकोऽन्त्यजो वा पितृमातृशुद्धिविवर्जितो वेश्यादास्यादितनयः कर्मडुङ्गितः कृतब्रह्महत्यादिमहापातकः डुगि वुगि वर्जने अस्य धातोः

---

१ अन्तर्भवन्तीत्यर्थः २ अयमप्यागमशास्त्रसंस्काररहितैस्सुधारकनामधारकैर्मननीयः । मेतार्यादिदृष्टान्तस्तु निषेधविधेर्दुर्बलिष्ठत्वाद्बलवत्त्वात् । प्रतिहारेषु जन्मान्तरशुद्धानां दोषविशेषवशात्तिर्यग्भावमाप्तानामपि । स्वयंबुद्धानां केषाञ्चित्कथोपलभ्यते परन्तु न भवति तेनाधिकारानुमानम्.

प्रयोगात् वर्जनीय इत्यर्थः १५ अवबद्धः परेभ्यो द्रव्यं ग्रहीत्वा मासवर्षादिपर्यन्तं सेवां गतः १६ भृतको वस्त्र भोजनादिमूल्येन परस्य दास्यं गतः १७ शेषः निस्फोटितः पितृमातृगुरुमहत्तरादिभिरननुज्ञातः प्रव्रज्यां बलात्कारेण जिघृक्षुः १८ अमी अष्टादश पुरुषेषु दीक्षायां वर्जनीयाः । विंशतिः स्त्रीषु वर्ज्याः यथा—"जे अट्ठारस भेआ पुरिसस्स तहित्थिआइं ते चेव । गुव्विणि सबालवत्सा दोणि इमे हुंति अन्नेवि ॥ १ ॥" बालाद्या अष्टादश दोषाः स्त्रीष्वपि ते एव १८ गुर्विणी १ स्तनन्धयापत्यसहिता च २ दोषद्वयमीलनाद्विंशतिः २० नपुंसकेषु दशादीक्षणीयाः यथा—"पंडए १ वाइए २ कीवे ३ कुंभी ४ ईसालूइत्ति अ ५ । सव्वणि ६ तक्कमसेवीय ७ पक्खियापक्खिए इअ ॥१॥ सोगंधिए अ ९ सा सत्ते १० दस एए नपुंसगा । संकिलिट्ठति साहूणं पव्वावेउं न कप्पिआ ॥ २ ॥" तत्र षण्डः—"नारीस्वभावस्वरवर्णभेदो मेढ्रो गरीयान् मृदुला च वाणी । सूत्रं सशब्दं च सफेनकं च एतानि षट् षण्डकलक्षणानि ॥१॥" १ वाचिकः स्तब्धलिङ्गः यस्य भगप्रवेशमात्रेण लिङ्गे श्वयथुर्भवति २ क्लीबः यस्य स्त्रीदर्शनाद्बीजं क्षरति ३ कुंभी यस्य बीजपतनकाले वृषणः कुंभवत्पीवरो भवति ४ ईर्ष्यालुः यस्य कामितस्त्रियां परपुरुषालापदर्शनमात्रेण ईर्ष्या भवति ५ शकुनिः उत्कटवेदोदयः सप्तधातुक्षयेऽपि यस्य कामोद्गमो न क्षीयते ६ तत्कर्मसेवी यस्य सर्व व्यापारान् विमुच्य

१ एतेन ये महात्मानो बालान् कथमपि बोधयित्वा पित्राद्याज्ञामन्तरैव दीक्षन्ते देशान्तरं प्रेष्य दीक्षयन्ते वा त आज्ञाविराधका अनुत्साहिताः । उपदेशेऽधिकुर्वन्ति मुनयो नादेशे.

केवलं स्त्रीसेवा भोजनादिसर्वावस्थास्वपि संभोगः ७ पाक्षिकापाक्षिकः यस्य एकस्मिन् पक्षे कामोदयः न द्वितीये ८ सौगन्धिकः सदा गलितशुक्रः स्वलिङ्गं जिघ्रति ९ आसक्तः पतितेऽपि वीर्ये नारीशरीरमालिङ्ग्य तिष्ठति १० एते दश नपुंसकभेदाः संक्लिष्टा इति प्रव्रज्यायां अकल्पिताः । तत्रैषां दशविधानां कृतसंभोगानामपि पुंवेदोदययुक्तानां नपुंसकत्वं कथमित्युच्यते ? तथा चागमे—"अच्चंतं च अतुत्तं कामं सेवंति पुरिसा जे । ते सव्वे विहुं नेया नपुंसगं वेअमावन्ना ॥ १ " तथा च तत्वार्थटीकायां कामस्य वैकृत्यमन्यासक्तिर्नपुंसकत्वं अतएव दशप्रकारा नपुंसकस्यामी वर्जनीयाः तृतीयप्रकृतेर्नपुंसकस्य वर्जनं क्लीबे इति पुरुषवर्जनमध्ये कथितं । विकलाङ्गा वर्जनीया यथा—"हत्थे पाए कहे नासा उट्ठेवि वज्जिआ चेव । वामणगवडभकूज्जा पंगुलटुंठा य काणा य ॥ १ ॥ पच्छा विहुंति विगला आयरियत्तं न कप्पए तेसिं । सीसो ठावेअव्वो वइत्तेव नन्नेसिं ॥ २ ॥" आजन्मकालाद्वा पश्चाद्वा हस्तहीनाः पादहीना नासाहीना ओष्ठहीना वामना वडभाः कुब्जाः पङ्गवः टूंटा काणाः प्रव्रज्यां न अर्हन्ति । तत्र वडभाः सङ्कुचितकरचरणाः शेषाः प्रसिद्धाः । कदाचित् पटुशरीरा अपि गृहीतदीक्षा गते काले हस्तहीनादिदोषान् प्राप्नुवन्ति तेषां सर्वगुरुगुणयुतानामपि नाचार्यत्वं कल्पते । शिष्यः काणकादिदोषसहितो व्रतित्व एव स्थाप्यो न पदमारोप्यः । इत्यदीक्षणीयाधिकारः । इत्यादिपूर्वदोषरहितो मार्दवार्जवक्षमानिधिः शमसंवेगनिर्वेदानुकंपास्तिक्ययुतो दीक्षायै कल्पते । यत उक्तमागमे—"सुद्धो जाइ कुलेणं रूवेणं तहय उवसमी धीरो । संविग्गमणो तुट्ठो पव्वज्जं

कप्पए पुरिसो ॥ १ ॥" परसमयेऽपि—"द्विजातिः शौचवान् विद्वान् सर्वज्ञः शान्तो जितेन्द्रियः। विषयेभ्यो विरक्तश्च नरः संन्यासमर्हति ॥ १ ॥" तथा च—"गार्हस्थ्यं ब्रह्मचर्यं च क्षुल्लकत्वमुपास्य च। व्रताय कल्पते देही ब्रह्मचार्यपि कुत्रचित् ॥ १ ॥" गृही पालितगार्हस्थ्यतुलितब्रह्मचर्यः पूर्णीकृतक्षुल्लकत्वो यदि न प्रव्रज्याग्रहणे प्रभवति तदा तस्य पुनर्गार्हस्थ्यमुचितं प्रव्रज्याग्रहणे तु न पुनर्गार्हस्थ्यं। यदुक्तमागमे—"बालत्ते ब्रम्हचरित्ते गिहत्थत्ते विहुव्वणे। गहिऊण वयं पच्छा मरणेवि न सोयये ॥ १ ॥" यथा विध्युपनीतस्य बालस्यापि ब्रह्मचारिणो व्रतदानं युज्यते। अत्र कर्मणि गुरुः पूर्वोक्त एव। यदुक्तमागमे—"आयरिअउवज्झाओ पवत्तओ तहयवायणायरिओ। गीयत्थो वा साहू पव्वज्जं दिज्जूअ वराणं ॥ १ ॥ जेसिं वंदणकम्मं किज्जई साहुहिं सावएहिं। पित्तेपवज्जादाणे गुरुणो जुत्ता न अन्नेवि ॥ २ ॥" गच्छसमाचारी विशेषेण आचार्यैरेव प्रव्रज्या दीयते क्वचिदुपाध्यायैरपि तत्र गुरुक्रमः प्रमाणं। तद्विधिरुच्यते—"दीक्षायां स्थापनायां च शस्तं मूलं पुनर्वसू। स्वातिमैत्रं करः श्रोत्रं पौष्णं ब्राह्मोत्तरात्रयम् ॥ १ ॥ समदोषोज्झिते धिष्ण्ये वारे शुक्रकुजोज्झिते। तिथिष्वदोषासु वर्षमासवासरशुद्धितः ॥ २ ॥ गोचरस्य विशुद्धौ च द्वयोश्चन्द्रबले तथा। जन्मादिमासत्यागे च सौजन्ये गुरुशिष्ययोः ॥ ३ ॥ लग्ने शुभे सर्वबलयुक्ते गुरुबलान्विते। यथोक्तगुणयुक्तस्य गुरुभिर्दीयते व्रतम् ॥ ४ ॥ भृगोरुदयवारांशभुवनेक्षणपञ्चके। चन्द्रांशोदयवारे च दर्शने च न दीक्षयेत् ॥५॥ षट्द्व्येकादशपञ्चमे दिनकरस्त्र्याायषष्ठे शशी लग्नात्सौम्यकुजौ शुभावुपचये केन्द्रत्रिकोणे गुरुः। शुक्रः

षष्ठत्रिनवान्त्यगोऽष्टमसुतद्व्येकादशो मन्दगो लग्नांशादिगुरुज्ञचण्डमहसां शौरेश्च दीक्षाविधौ ॥ ६ ॥ रवि-
स्त्रृतीयो दशमः शशाङ्को जीवेन्दुजावन्तिमनाशवर्जौ । केन्द्राष्टवर्जो भृगुजस्त्रिशत्रुसंस्थः शनिः प्रव्रजने मतो-
ऽन्यैः ॥ ७ ॥ शुक्राङ्गारकमन्दानां नाभीष्टः सप्तमः शशी । तमःकेतू तु दीक्षायां प्रतिष्ठावच्छुभाशुभौ ॥ ८ ॥
कलहभयजीवनाशनधनहानिविपत्तिनृपतिभीतिकरः । प्रव्रज्यायां नेष्टो भौमादियुतः क्षपानाथः ॥९॥" एवं-
विधे लग्ने प्रथमं दीक्षाप्रारंभः । दीक्षणीयः स्वपितृपक्षगृहाद्वा स्वमातृपक्षगृहाद्वा स्वसंबन्धिगृहाद्वा संबन्धि-
कृतान्यगृहस्थगृहाद्वा नरयानतुरङ्गशिबिकारूढः कृतविवाहोचितमङ्गलगानवाद्यमहोत्सवः स्वस्वर्णप्रभृतोचि-
तवेषालङ्कारधारी चैत्येष्वर्हत्प्रतिमाः संपूज्य तथैव गुरुवसतिमागच्छेत् । दारं-पुच्छा १ वासे २ चिइ ३
वेस ४ वंदणु-५ स्सग्ग ६ लग्ग अट्ठतिअं ७ समइअतिय तिपयाहिणं ८ उस्सग्गो ९ नाम १० अणुसट्ठी ११
महादानं च दत्वा सर्वदर्शनानि प्रीणयेत्, महोत्सवपूर्वकं गुरुसमीपमागच्छेत् तत्र पृच्छा कस्त्वं ? केन वा
कारणेन प्रव्रजिष्यसीत्यादि पृच्छाशुद्धः शुभशकुनैः प्रवर्धितोत्साहश्च प्रशस्तदिवसे क्रियाऽऽरंभः प्राच्या-
भिमुखः शिष्यः उत्तराभिमुखो गुरुः सहर्षमर्धावनतीभूय गुरुसम्मुखं तिष्ठेत् । अक्षतनारीकेलीफलभृता-
ञ्जलिः समवसरणं त्रिः प्रदक्षिणयेत् । फलं नंद्यंतिके स्थापयति । ततो गुरुः शिरो १ मुख २ हृन्नाभ्यधोगा-
त्राणि आरोहावरोहारोह क्रमेण क्षि-प-ॐ-स्वा-हा इत्येतैरक्षरैर्दक्षिणकरानामिकया स्पृशन् प्रथमं स्वस्या-
त्मरक्षां कृत्वा ततः शिष्यस्यापि करोति । ततः गुरुः-सूरिमन्त्रेणतदन्यस्तु वर्धमानविद्यया कृतोत्तरासङ्गः

मुखकोश-जानुस्थ-भव्यश्राद्धकरयुगधृतगंधभाजनस्थान् गन्धानभिमन्त्रयते। अनामिकाङ्गुल्या प्रथमं मध्येविशन् दक्षिणावर्तस्तदुपरि स्वस्तिकः तन्मध्ये प्रणवः ततः ऐन्द्रयां वारुण्यन्तं कौवेर्यायम्यन्तं ऐशान्या नैरुत्यन्तं आग्नेया-वायव्यन्तं च यावद् रेखा चतुष्टयेनाष्टारं चक्रं कृत्वा मध्ये मूलबीजं त्रिवेष्टितं क्रौंकारान्तं लिखेत्। ऐन्द्रयांदिशि मूलबीजाक्षराभिमुखं मन्त्राक्षराणि चिन्तयन् ॐ ह्रीँ नमोऽरिहन्ताणं, इति प्रथम परमेष्ठिपदं तत्र स्थापयेत्। एवं यावत् पश्चिमायां ॐ ह्रीँ नमो लोए सव्वसाहूणं। वायव्यां ॐ नमो

(१) (२) (३) (४) (५)

नाणस्स; कौबेर्यां ॐ ह्रीँ नमो दंसणस्स । ईशान्यां ॐ ह्रीँ नमो चारित्तस्स एवं मनसैव स्थापयेत् । यन्त्रम् ततः स्वमन्त्रं स्मरन् सप्तभिर्मुद्राभिर्वासान् स्पृशेत् । यथा पञ्चपरमिट्ठि १ सुरहि २ सोहग्ग ३ गरुड ४ पउमाय ५ । मुग्गर ६ कराय ७ सत्ताउ कायव्वा गंधदाणम्मि । प्रत्येकमुद्रयैकैकवारमिति सप्तवारं वासाभि मंत्रणं । पवज्जोवठावणगणिजोग पइट्ठा उत्तमठपडिवत्तिआइ सुकज्जे सत्तवाराउ, जविया‍ए गंधखेव कए नित्थार पारगो होह पुआसक्कारिओ होह । आदेशपूर्वकं खमा० ईर्यापथिकीं प्रतिक्रामति । ततः खमा० दत्वा इच्छाकारेण संदिसह भगवन् "वसहि पवेउं ?" इत्यादेशं मार्गयति । गुरु "पवेह" शिष्य "इच्छं" क्षमाश्रमणं दत्त्वा भगवन् "सुद्धा वसहि" गुरु "तहत्ति" पुनः क्षमा० इच्छा० संदि० भग० मुहपत्ती पडिलेहुं ? गुरु "पडिलेहेह" शिष्य "इच्छं" उक्त्वा मुहपत्तिं प्रतिलेखयति । पुनः क्षमा० इच्छकारि भगवन् तुम्हे अम्ह सम्यक्त्व-सामायिक-श्रुतसामायिक-सर्वविरति सामायिक आरोवावणी नंदीकरावणी वासनिक्खेवं करेह । गुरु-"करेमि" शिष्य "इच्छं" भणित्वा गुर्वन्तिकेऽर्धावनतकायो विनयतयावतिष्ठते । ततो गुरुः वर्धमानविद्याभिमन्त्रित वासचूर्णमुष्टिमादाय सव्वस्स (भव्वाए) सम्यक्त्वसामायिक ३ आरोव नंदीपवत्तेह नित्थारपारगाहोह इति भणन् वासचूर्णं विनेयशीर्षे निदधाति । शिष्य "तहत्ति" इति वासद्वारं । ततः खमा० इच्छकारि भगवन् तुम्हे अम्ह सम्य० ३ आरोवावणी नंदीकरावणी वासनिक्खेव करावणी देवे वंदावेह गुरु-"वंदेह" । खमा० इच्छा० संदि० भगवन् चैत्यवंदन करुं-गुरु-"करेह" शिष्य-

"इच्छं" भणित्वा चैत्यवन्दनमुद्रयो पविशति–गुरुः चैत्यवन्दनं कारापयति यथा–

चैत्यवन्दनं—ॐ नमः पार्श्वनाथाय विश्वचिन्तामणीयते । ह्रीँ धरणेन्द्रवैरोट्या पद्मादेवी युतायते ॥१॥

शान्ति तुष्टि महापुष्टि धृतिकीर्ति विधायिने । ॐ ह्रीँ द्विड्व्यालवैताल सर्वाधिव्याधिनाशिने ॥२॥

ॐ जयाजिताख्या विजयाख्या–पराजितयान्वितः । दिशांपालै ग्रहै यक्षै र्विद्यादेवीभिरन्वितः ॥३॥

ॐ असिआउसायनमस्तत्र त्रैलोक्यनाथताम् । चतुष्षष्ठिसुरेन्द्रास्ते भासन्ते छत्रचामरैः ॥४॥

श्रीशङ्खेश्वरमन्डन पार्श्वजिनप्रणतकल्पतरुकल्प । चूरय दुष्ट व्रातं पूरय मे वाञ्छितं नाथ ॥५॥

जंकिंचि० नमुत्थुणं० अरिहंतचेइआणं० अन्नत्थ० उक्त्वा पंचपरमेष्ठिमन्त्र काउ० ( एक नवकार ) शिष्य कायोत्सर्गे स्थित्वा श्रृणोति गुरु (पारयित्वा) स्तुतिः—नमोऽर्हत्०

अर्हस्तनोतु स श्रेयः श्रियं यद्ध्यानतो नरैः अप्यैन्द्री सकलाऽत्रैहि रंहसा सहसौच्यत ॥१॥

प्रगट लोगस्स० सव्वलोए अरिहंत चेइयाणं० अन्नत्थ० काउ० ( एक नवकार ) द्वितीया स्तुतिः–

ओमिति मन्ता यच्छासनस्य नन्ता सदा यदङ्घ्रींश्च, आश्रीयते श्रिया ते भवतो भवतो जिनाः पान्तु ॥२॥

पुक्खरवरदी० सुअस्स भगवओ. वंदणवत्तिआए० अन्नत्थ० काउ० (एक नवकार) स्तुति.

नवतत्त्वयुता त्रिपदीश्रिता रुचिज्ञानपुण्यशक्तिमता । वरधर्मकीर्तिविद्यानन्दा–स्या जैनगीर्जीयात् ॥३॥

सिद्धाणं बुद्धाणं० श्री शान्तिनाथ आराधनार्थं करेमि काउ० वंदणवत्तिआए० अन्नत्थ० [काउ० चतु-

विंशतिस्तव (लोगस्स) सागरवरगंभीरा यावत्] नमोऽर्हत्०

श्री शान्तिः श्रुतशान्तिः प्रशान्तिकोऽसावशान्तिमुपशान्तिम् ।
नयतु सदा यस्य पदाः सुशान्तिदाः सन्तु सन्ति जने ॥५॥

श्री द्वादशाङ्गी आराधनार्थं करेमि काउ० वंदणवत्तिआए० अन्नत्थ० काउ० (एक नवकार)–नमोऽर्हत्०

सकलार्थसिद्धिसाधन बीजोपांगा सदास्फुरदुपाङ्गा ।
भवतादनुपहतमहा–तमोपहा द्वादशांगी वः ॥ ५ ॥

श्री श्रुतदेवता आराधनार्थं करेमि काउ० अन्नत्थ० [ काउ० एक नवकार ]

नमोऽर्हत्, वदवदति न वाग्वादिनि, भगवति कः श्रुतसरस्वति गमेच्छुः ।
रंगत्तरंगमतिवर तरणिस्तुभ्यं नम इतीह ॥ ६ ॥

शासनदेवता आराधनार्थं करेमि काउ० अन्नत्थ० (एक नवकार)

नमोऽर्हत्०–उपसर्गवलयविलयन–निरता जिनशासनावनैकरताः
द्रुतमिह समीहितकृते स्युः शासनदेवता भवताम् ॥ ७ ॥

समस्तवेयावच्चगराणं संतिकराणं सम्मदिट्ठिसमाहिगराणं करेमि काउ० (एक नवकार) नमोऽर्हत्०

सङ्घेऽत्र ये गुरुगुणौघनिधेसुवैया–वृत्यादि कृत्य करणैक निबद्धकक्षाः

ते शान्तये सह भवन्तु सुरासुरीभिः सद्द्रष्टयो निखिल विघ्नविघातदक्षाः ॥ ८ ॥

प्रगट नवकार–नमुत्थुणं० जावंति चेइआइं० जावंत केविसाहु० नमोऽर्हत्० पंचपरमेष्ठिस्तव :—

ॐमिति नमो भगवओ अरिहंत सिद्धायरिय उवज्झाय ।

वरसव्वसाहु मुणि संघ धम्म तित्थप्पवयणस्स ॥ १ ॥

सप्पणव नमो तह भगवइ–सुयदेवाइ सुहयाए । सिवसंति देवयाए सिव पवयण देवयाणं च ॥ २ ॥

इंदागणिजम नेरइअ वरुणवाउ कुबेर ईसाणा । बंभो नागुत्तिदसण्ह–मविय सुदिसाणपालाणं ॥ ३ ॥

सोमयमवरुणवेसमण वासवाणं तहेव पंचण्हं । तह लोगपालयाणं सुराइ गहाणय नवण्हं ॥ ४ ॥

साहंतस्स समक्खं मज्झमिणं चेव धम्मणुट्ठाणं । सिद्धिमविग्घं गच्छउ जिणाइ नवकारओ घणियं ॥५॥

जयवियराय० संपूर्ण । इति चैत्यद्वारं तृतीयम् ॥

ततः प्रतिमायां पटावरणं कृत्वा स्थापनाचार्य समक्षं वन्दनके० [ अत्र दीक्षाविधौ यद्यपि प्राचीन विध्याद्यनुसारेण नन्दिसूत्रश्रावणं न दृश्यते तथाप्याधुनिका नन्दीसूत्रं श्रावयन्ति–इति तन्निमित्तक वन्दन–कायोत्सर्गादिकमप्युच्यते ] क्षमा० इच्छकारि–भगवन्–तुम्हे अम्हं सम्यक्त्व सामायिकश्रुतसामायिक–सर्वविरति सामायिक आरोवावणी–नंदिसूत्रकड्ढावणी–वासनिक्खेव करावणी–देववंदावणी–नंदिसूत्र–संभलावणी काउ० करुं? करेह। इच्छं–क्षमा० इच्छकारि० भग०–सम्यक्त्व० ३. आरो० नंदि० वास०

देव० नंदि० करेमि काउ० अन्नत्थ० (कायोत्सर्गः गुरुशिष्ययोः) सागरवरगंभीरेति यावत् चतुर्विंशतिस्तवः, प्रगटं चोज्जोतकरं (लोगस्स) भणित्वा–क्षमा० इच्छकारि भगवन् पसाउ करी मम नंदीसूत्र संभलावोजी. गुरुः भणति; श्रुणु। नाणं पंचविहं पन्नत्तं तं जहा–आभिणिबोहिअनाणं सुयनाणं ओहिनाणं मणपज्जवनाणं केवलनाणं–तत्थ चत्तारि नाणाइं ठप्पाइं ठपिज्जंति नो उद्दिसिज्जंति नो समुदिज्जंति नो अणुन्नविज्जंति सुअनाणस्स उद्देसो समुद्देसो अणुन्नाणुओगो पवत्तइ इमं पुण पट्ठवणं पडुच्च भव्वस्स (भव्याए) सम्यक्त्व सामायिक ३ आरोव नंदि पवत्तेह। नित्थारपारगाहोह। शिष्य तहत्ति। ततो हस्तद्वय सम्पुटं द्वयो द्वयो-रंगुल्योरन्तरे मुखवस्त्रिकां कृत्वा तिष्ठति। गुरुमंत्रपूर्वकं वासचूर्णं शिरसि निधाय पुनर्वासमुष्टिं गृहीत्वा नमस्कारपूर्वकं नंदीसूत्रं त्रिशः श्रावयेत्। ततो वासक्षेप पाठपूर्वकं वासचूर्णं शिरसि निदधाति। इच्छामो अणुसट्ठिं नमो खमासमणाणं। ततः शिष्यः क्षमा० इच्छकारि भगवन्–मम मुंडावेह। गुरुः "मुंडावेमि" शिष्यः "इच्छं" क्षमा० इच्छकारि भगवन् मम पव्वावेह। गुरुः पव्वावेमि। शिष्यः "इच्छं" क्षमा० इच्छाकारि भगवन् मम वेसं समप्पेह। गुरुः, समप्पेमि। शिष्यः "इच्छं" ततो गुरुरुत्थाय–सुग्गहियं करेह। इति कथनपूर्वकं शिष्यस्य दक्षिणभुजामभि रजोहरणदशिका आयांति तथा उत्तर सन्मुखं–पूर्व सन्मुखं वा भूत्वा–त्रिनमस्कारमंत्रपूर्वकं सकल्पक (कपडा सहित) रजोहरण मुखवस्त्रिके प्रदेये। शिष्य सहर्षं गृहीत्वा–रजोहरणं मस्तके धृत्वा नृत्यति। इति वेषद्वारं चतुर्थम्॥ ततो ईशानदिशि गत्वा मुण्डनादिकं

काराप्य-आभरणादिकं उत्तार्य वेशं परिधत्ते। ततो गुरु समीपे आगत्य क्षमा० ईर्यापथिकीं प्रतिक्रम्य क्षमा० इच्छकारि भगवन् मम मुंडावेह। गुरुः मुंडावेमि शिष्य "इच्छं" क्षमा० इच्छकारि भगवन्-मम पव्वावेह गुरुः "पव्वावेमि"। शिष्य-"इच्छं"। क्षमा० इच्छकारि भगवन् तुम्हे अम्ह मम सम्यक्त्व० ३ सामायिकं आरोवेह गुरुः "आरोवेमि"। क्षमा० इच्छाकारेण संदि० भग० मुहपत्ति पडिलेहुं? गुरुः "पडिलेहेह" मुखवस्त्रिकां प्रतिलिख्य वन्दनके (बे वांदणां) इति वन्दनकं द्वारं। ततः क्षमा० इच्छकारि भग० तुम्हे अम्ह सम्यक्त्व सामायिक ३ आरोवावणी काउ-करुं? गुरुः-करेह"। इच्छं-खमा० इच्छ० ३ करेमि काउ० गुरुशिष्यौ०। उद्योतकरः (लोगस्स० सागरवरगंभीरा०) प्रगट लोगस्स०। इत्युत्सर्गद्वारं षष्ठम्॥ ततः प्रशस्त लग्नावसरे श्वासमुर्ध्वीकृत्य नमस्कार त्रयमुच्चरन् गुरुः अवशिष्टं केशान् (शिष्यस्य) अस्खलितं गृह्णाति। इति लग्नद्वारं सप्तमम्। ततः क्षमा० इच्छकारि भगवन् पसाय करी मम सम्यक्त्व दंडक उच्चरावोजी। गुरुस्त्रिशः नमस्कारपूर्वकं सम्यक्त्वालापकं श्रावयेत्। यथा-अहन्नं भंते तुम्हाणं समीवे मिच्छत्ताउ पडिक्कमामि, सम्मत्तं उवसंपज्जामि-तं जहादव्वओ, खित्तओ-कालओ, भावओ। दव्वओणं, मिच्छत्तकारणाइं पच्चक्खामि सम्मत्त कारणाइं उवसंपज्जामि नो मे कप्पइ अज्जप्पभिई अन्नउत्थिए वा अन्नउत्थिअ देवयाणि वा अन्नउत्थियपरिग्गहियाणि वा, अरिहंत चेइआणि वंदित्तएवा नमंसित्तए वा पुव्विं अणालत्तेणं आलवित्तए वा संलवित्तए वा तेसिं असणं वा पाणं वा खाइमं

वा साइमं वा दाउं वा अणुप्पदाउं वा खित्तओ णं इत्थं वा अन्नत्थं वा कालओणं जावज्जीवाए, भावओ णं जावग्गहेणं न गहिज्जामि जाव छलेणं न छलिज्जामि जाव संनिवाएणं नाभिभविज्जामि जाव अन्नेण वा केणइ वा रोगायं काइणा एस परिणामो न परिवडइ ताव मे एयं सम्मंदंसणं नन्नत्थ रायाभिओगेणं, गणाभिओगेणं बलाभिओगेणं देवाभिओगेणं गुरुनिग्गहेणं वित्तिकंतारेणं वोसिरामि । सम्मं अणुसरामि नित्थारपारगा-होइ । अरिहंतो मम देवो जावज्जीवं सुसाहुणो गुरुणो, जिनपन्नत्तं तत्तं इय सम्मत्तं मए गहियं । इति सम्यक्त्वालापकः ॥ क्षमा० इच्छकारि भगवन् पसाउ करी सर्वविरति दंडक उचरावोजी । गुरुः नम-स्कारपूर्वकं त्रिशः श्रावयेत् । "करेमि भंते सामाइअं सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए, तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते पडिक्क-मामि निंदामि गरिहामि अप्पाणं वोसिरामि । शिष्योऽप्यूर्ध्वस्थ एव आत्मानं कृतार्थं मन्यमानः अनुकथयति ॥ इति सामायिकत्रिकच्चारम् ॥ अभिमन्त्रिताक्षतान् सवासचूर्णं चतुर्विध सङ्घं दत्वा । क्षमा० इच्छकारि भग० तुम्हे अम्ह सम्यक्त्व० ३ आरोवेह । गुरुः "आरोवेमि" । शिष्य–इच्छं" क्षमा० संदिसह "किं भणामि" । गुरुः "वंदित्ता पवेह" । शिष्यः इच्छं । क्षमा० इच्छ० भग० तुम्हे अम्हं श्रुतसामायिक ३ आरोवियं इच्छामो अणुसट्ठिं । गुरुः "आरोवियं २ खमासमणेणं हत्थेणं सुत्तेणं अत्थेणं तदुभयेणं सम्मं धारिज्जाहि अन्नेसिं पवे-ज्जाहि गुरुगुणगणेहिं वुड्ढिज्जाहि नित्थारपारगाहोह । शिष्यः "तहत्ति" । क्षमा० तुम्हाणं पवेइअं संदिसह

साहूणं पवेमि। गुरुः "पवेह"। शिष्यः "इच्छं"॥ प्रतिमाभिमुखं नमस्कारमुच्चरन् गुरोः सद्वाच वासादान-पुरस्सरं समवसरणं त्रिःप्रदक्षिणा दत्त्वा क्षमा० तुम्हाणं पवेइयं साहूणं पवेइयं संदिसह काउस्सग्गं करेमि। गुरुः "करेह" शिष्यः "इच्छं"। क्षमा० इच्छ० भग० तुम्हे० सम्यक्त्व ३ स्थीरीकरणत्थं करेमि काउ० अन्न-त्थ० लोगस्स० सागरवरगंभीरा. प्रगट लोगस्स०। क्षमा० अविधि आशातना मिच्छामि दुक्कडम्। इति कायो-त्सर्गद्वारं नवमम्॥ क्षमा० इच्छाकारेण संदि० भग० पवयणा मुहपत्ति पडिलेहु? गुरुः "पडिलेहेह" वन्दनके (बे वांदणां) इच्छा० संदि० भग० पवेयणुं पवेउं? गुरुः "पवेह"। शिष्यः "इच्छं"। क्षमा० इच्छ० भग० तुम्हे अम्हं सम्यक्त्व० ३ आरोवावणी नंदीकरावणी वासनिक्खेव करावणी देववंदावणी नंदीसूत्रसंभला-संभलावणी नंदीसूत्रकड्ढावणी सम्यक्त्व० श्रुत० सर्वविरति० आरो० काउसग्ग करावणी–पाली–तप करस्युं आचाम्लोपवासादिकं यथाशक्ति प्रत्याख्याति॥ वन्दनके। इच्छा० संदि० भग० वेसणगं संदिसावेमि। गुरुः संदिसह खमा० इच्छा० "वेसणगं ठाएमि"। गुरुः "ठाएह"। खमा० अविधि० खमा० इच्छ० भग० मम नाम ठवणं करेह। ततो गुरुः वासक्षेपं विदधत् शिष्यं निजनाम वर्गादिदोषरहितं नाम स्थापयेत्। त्रिनमस्कारपूर्वकं-कोटिगण-वज्रीशाखा-चान्द्रकुलाचार्य पाटपरंपराचार्य-उपाध्याय० साध्वी-श्रावक-श्राविका–इति चउविहसङ्घ सक्खियं........शिष्य........प्रव्राजित........तव–नाम........। वासक्षेपः। नाम स्थापने सप्तधाशुद्धिरवसेया। तद्यथा–नक्षत्रयोन्य विरोधः १। गणाविरोधः २। वर्गाविरोधः ३। नाड्यविरोधः ४।

गमनिरोधः ५। गमागमनिरोधः ६। लम्भालम्भः ॥७॥ चतुर्विधोऽपि मङ्गलवासक्षेपं करोति। क्षमा॰ इच्छा॰ भ॰ मम मंतपयाणं करेह"। गुरुः करेमिः। शिष्य "इच्छं"। शिष्यस्य दक्षिणकर्णे "ॐ ह्रीँ ह्रूँ नमः वीराय स्वाहा" असिआउसायेत्" इति (सम्प्रदायायात् मंत्राक्षरैः) एकविंशतिवार–सप्तवारं वा श्रावयेत् ॥ शिष्यः वामस्कंधे कल्पक (कपडो) गृहीत्वा खमा॰ इच्छा॰ संदि॰ भग॰ सज्झाय करूं?। "करेह"। "इच्छं" नवकार॰ धम्मोमंगलमुक्किट्ठं॰ खमा॰ इच्छा॰ संदि॰ भग॰ उपयोग करूं?" गुरु "करेह" खमा॰ इच्छा॰ संदि॰ भग॰ उपयोग करावणी काउ–करुं? करेह इच्छं. उपयोग करावणी करेमि काउ॰ १ नवकार॰ प्रगट नवकार॰ इच्छा॰ संदि॰ भग॰ लाभ"। कहं लेशुं? जहगहियं पूव्वसाहूहिं आयरिसआए जस्सुग्गहोत्ति सज्झातर घर। क्षमा॰ इच्छकारि भग॰ पसाय करी हितशिक्षा प्रसाद करशोजी गुरुः हितशिक्षा॰। चत्तारि परमंगाणि इत्यादि॰ खमा॰ इच्छा॰ संदि॰ भग॰ सचित्त अचित्त रज ओहड्डावणार्थं काउ॰ इच्छं॰ सचित्त॰ करेमि काउ॰ ४ लोगस्स॰ सागरवर॰ प्रगट लोगस्स॰ खमा॰ अविधि॰। खमा॰ इच्छा॰ संदि॰ भग॰ क्षुद्रोपद्रव उड्डावणार्थं काउ॰ इच्छं॰ क्षुद्रोपद्रव॰ करेमि काउ॰ अन्नत्थ॰ ४ लोगस्स॰ सागरवर॰। स्तुति॰ सर्वे यक्षाम्बिकाद्याये॰ ९ वारं। प्रगट लोगस्स॰ खमा॰ अविधि॰ आशा॰ मिच्छा॰ दुक्कडं ॥ गुरुवन्दनम्। सङ्घ नूतनमुनिं वन्दनं। यथाशक्ति कम्बल–कल्पकादि अर्पयेत्। मुनिः ईशानकोणे नवकार महामन्त्रस्य १०८ "गुणनं" ॥ इति प्रव्रज्याविधिः

## -अथ अनुयोगविधिः-

उपस्थापना पूर्वदिने सायं अनुयोगः क्रियते ॥ गुरु समीपं आगत्य वसही सुद्धः । खमा० ईर्यावहि-आ० । खमा० इच्छा० वसहि पवेउं-"पवेह" खमा० भगवन् सुद्धा वसहि-तहत्ति. खमा० इच्छा० संदि. भग० मुहपत्ति पडिलेहु ? [ योगोद्वहनकाले यदि उपस्थापना क्रियते तदा अत्र सायंकालिनं क्रिया काराप्यते] ततः वन्दनके ॥ खमा० इच्छा० संदि० भग० अनुयोग आढवुं ? "आढवेह" ! इच्छं ! खमा० इच्छा० संदि० भग० अणुओग आढवावणीयं काउ करुं ? "करेह" खमा० इच्छा० संदि० भग० अणु० आढ० करेमि काउ० अन्नत्थ० नवकार० प्रगट नवकार ॥ इच्छामि खमासमणो-वंदिउं जावणिज्जाए निसीहि-आए-"गुरु-तिविहेण-शिष्य-मत्थएण वंदामि । इच्छा० संदि० भग० वायणगं संदिसावेमि ? संदिसह । इच्छं० खमा० इच्छा० संदि० वायणगं लेइस्सामि गुरु लेज्यो" । खमा० "तिविहेण" मत्थएण वंदामि इच्छा० संदि० भग० वेसणगं संदिसावेमि ?" संदिसावेह "इच्छं० खमा० इच्छा० संदि० भग० वेसणगं ठाएमि? ठाज्यो" इच्छं० चैत्यवंदनमुद्रा। गुरुः "नाणं पंचविहं पन्नत्तं तं जहा आभिणिबोहि नाणं-सुयनाणं ओहिनाणं-मणपज्जवनाणं-केवलनाणं तत्थ-चत्तारि अणुओगदारा पन्नत्ता तं जहा-उवक्कमो-निक्खेवो-अणुओगो नओअ- । त्रिशः पाठः । ततः खमा० इत्यादि ४. ॥ तत प्रथमं आवश्यकपाठः । नवकार० तस्यार्थः करेमि भंते० अर्थः । खमा० अविधि० आशा० ॥

द्वितीय आव० वायणादि खमा० ४। लोगस्स० अर्थः अविधि०॥ तृतीय आव० द्वादशावर्त वन्दनके० (दिवसो वइक्कंतो-राइ वइक्कंता-पक्खो वइक्कंतो-चउमासी वइक्कंता-संवच्छरो वइक्कंतो) इच्छा० संदि० भग० देवसिअं राइअं आलोउ इच्छं आलोएमि० ठाणे चंकमणे० संथारा उवट्टणकी० सव्वस्सवि० अब्भुट्ठिओ० अर्थः। खमा० अविधि० आशा०। वायणादि खमा० ४.॥ चतुर्थ आव० खमा० इरियावहि० तस्स उत्तरी० इच्छा० संदि० भग० चैत्यवंदन करुं? जगचिंतामणी० जं किंचि० नमुत्थुणं० अरिहंत चेइआणं० पुक्खरवरदी० सिद्धाणं बुद्धाणं० वेयावच्चगराणं० नमोऽर्हत्० संसारदावा० जावंति चेइआइं० खमा० जावंत० उवसग्गहरं० जयवीयराय० आयरिअ उवज्झाए० सयणासण० सुयदेवयाए० जीसे खित्ते० ज्ञानादिगुण० यस्या क्षेत्रं० [साध्वीनां कमलदल] नमोऽस्तु० वरकणय० विसाललोचन०। पर्यन्तः तेषामर्थः। नवकार० करेमि भंते चत्तारि मंगलं० इच्छामि पडिक्कमिउं० पगाम सज्झाय०॥ अर्थः॥ खमा० अवधि०। खमा० ४.। पञ्चमं आव०। अन्नत्थ उससिएणं०। अर्थः। खमा० अविधि०। खमा० ४। षष्ठं आव०। पच्चक्खाणं-नवकारसी-पोरिसिं-साढपोरिसिं-परिमुढअवढं-एगासणं-बियासणं-आयंबिलं-एकलठाणं० सूरे उग्गए अभत्तट्ठं० विगइओ निव्विगइअं० मुट्ठिसहिअं० गंठसहिअं० अन्नत्थणा० सहसा० पच्छन्न० दिसा० साहु० सागारिआ० आउं० गुरु० परिट्ठावणिया० पाणस्स० लेवेणवा० वोसिरे॥ दिवस-चरिमं पच्चक्खामि चउविहंपि आहारं असणं ४० अन्नत्थ०। पाणहार दिवसचरिमं० फासियं-पालियं-

सोहिअं-तीरिअं-किट्टीअं-आराहिअं-जं च न आराहिअं तस्स मिच्छामि दुक्कडम् ॥ तेषां अर्थः ॥ खमा० अविधि० आशातना मि०दु० ॥ खमा० इच्छा० संदि० भग० मुहपत्ति पडिलेहुं ? "पडिलेहेह" मुहपत्ति० । वन्दनकद्वयं० । इच्छा० संदि०भग० अनुओग आढवुं ? । "आढवेह" । इच्छं । खमा० इच्छा० अनुओग आढवावणीअं काउं करुं ? । "करेह" । इच्छं० अनु० आढ० करेमि काउ० अन्नत्थ० । एक नवकार काउ० । प्रगट नवकार० खमा० वायणादि ४ । नवकारपूर्वकं "नाणं पंचविह० वायणादि ४ क्षमा० ॥ दशवैकालिक पढमं अज्झयणं "धम्मो० मंगलमुक्किट्ठं गाथा पंचकम् ॥ इति दुमपुप्फिअ अज्झयणं ॥१॥ गाथा अर्थः ॥ वायणादि खमा० ४ ॥ कहनु कुज्जा सामन्नं० जहा से पुरिसोत्तमो त्तिबेमि० इति द्वितीयं सामन्न पूव्विय नाम अज्झयणं० ॥२॥ गाथा अर्थः ॥ वायणादि खमा० ४ ॥ अथ तृतीयं अज्झयणं-संजमे सुट्ठिअप्पाणं० ताइणो परिनिव्वुडे त्तिबेमि ॥ गाथा अर्थः इति खुडिअगतिय्यारकहा नाम तइअं अज्झयणं ॥३॥ अथ चतुर्थं अज्झयणं-सुयं मे आउसं तेणं० कम्मुणा न विराहिज्जासि त्तिबेमि गाथा अर्थः । इति छज्जीवणिया नामं चउत्थं अज्झयणं ॥४॥ वन्दनक द्वयं । अविधि आशा० मि०दु० ॥ पुनः सायंकालिन क्रिया० (यदि योगोद्वहनान्तराले अनुयोगं क्रियते) खमा० इच्छा० संदि० स्थंडिल(पडिलेहशुं) पडिलेहुं ? (साध्वीनां तु खमा० इच्छा० दिशाशुद्धि करशुं । अविधि० ॥

इति अनुओग विधिः सम्पूर्णम् ॥

## अथ उपस्थापनाविधि.

इह हि प्रव्रज्याग्रहणमात्रेण सामायिकयतित्वेन भगवन्तोऽर्हन्तः, अजितादि द्वाविंशति तीर्थंकर साधु साधव्यः, यतित्वमाप्नुवन्ति। न अतिरिक्ताः साधुसाधव्यः मण्डलीप्रवेशपूर्वं आवश्यक-दशवैकालिक योगोद्वहनं विदध्यात्। षडावश्यकाध्ययनानि-दशवैकालिक चत्वारोऽध्ययनानां योगोद्वहन पूर्णे उपस्थापना-विधि क्रियते। प्रथमं नंदिविधिः यावत् प्रदक्षिणा-मुहपत्ति प्रतिलिखनं-क्षमा० इच्छकारि भग० तुम्हे अम्ह पंचमहव्वयं तह। राइभोयणं वेरमणं वेरमणं छट्ठं आरोवावणी-नंदिकरावणी वासनिक्खेवं करेह। करेमि" "इच्छं"-खमा० इच्छ० भग० पंच महव्वय-राइभोयणं छट्ठं आरोवावणी नंदि करावणी वासनिक्खेवावणी देववंदावो, वंदावेमि-चैत्यवन्दन पूर्ववत् यावत् जयवीयराय-वन्दनकं-खमा० इच्छ० ग० तुम्हे अम्ह पंचमहव्वय-राइभोयणं वेरमण छट्ठं आरो० नंदि करावणी-वास० देववंदा० नंदिसूत्र संभलावणी-नंदि० कड्ढावणी काउ० करावो "करेह", "इच्छं" खमा० इच्छ० भग० तुम्हे अम्ह पंच० राइ० छट्ठं० आरो० नंदि० वास० देववंदा० नंदि० २ करेमि काउ० अन्नत्थ० काउ० लोगस्स० सागर०। प्रगट लोगस्स०। खमा० इच्छ० भग० पसाय करी मम नंदीसूत्र संभलावोजी "नवकार सहियं नंदिपाठः त्रिः। वास० नित्थारपारगाहोह। "तहत्ति"। खमा० इच्छा० संदि० भग० नंदिसूत्र कड्ढु? "इच्छं" "नाणं पंचविहं० इमं पुण पठवणं पडुच-मुनिने-पंचमहव्वय राइभोयणवेरमणं छट्ठं आरो० नंदि पवत्तेह" नित्थार० "तहत्ति"।

खमा० इच्छ० भग० तुम्हे अम्ह पंचमह० राइ० छट्ठं आरोवावणी काउ० करावो "करेह" इच्छं" खमा० इच्छ० भग० करेमि काउस्स० सागरवर० प्रगट लोगस्स० । खमा० इच्छ० भग० पसाय करी मम पंच-महव्वयदंडक उच्चरावोजी । गुरुः नवकार पूर्वकं आलापकानि उच्चारयन्ति । यथा—

पढमेभंते ! महव्वए पाणाइवायाओवेरमणं सव्वं भंते ! पाणाइवायं पच्चक्खामि, से सुहुमं वा बायरं वा तसं वा थावरं वा नेव सयं पाणे अइवाइज्जा, नेवन्नेहिं पाणे अइवायाविज्जा पाणे अइवायंते वि अन्ने न समणुजाणामि, जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि । पढमे भंते ! महव्वए उवट्ठिओमि सव्वाओ पाणाइवायाओ वेरमणं ॥ १ ॥ प्रथम महाव्रतालापकः एवं त्रिरुच्चार्य ॥ एवं सर्वेप्यालापकाः । अथ प्रथम व्रत शिक्षादातव्या ।

अहावरे दुच्चे भंते ! महव्वए मुसावायाओ वेरमणं सव्वं भंते मुसावायं पच्चक्खामि से कोहा वा लोहा वा भया वा हासा वा नेवसयं मुसं वइज्जा, नेवन्नेहिं मुसं वायाविज्जा मुसं वयंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि दुच्चे भंते ? महव्वए उवट्ठिओमि सव्वाओ मुसावायाओ वेरमणं ॥ २ ॥ अथ द्वितीयालापकः शिक्षा ।

अहावरे तच्चे भंते ! महव्वए अदिन्नादाणाओ वेरमणं सव्वं भंते ! अदिन्नादाणं पच्चक्खामि से गामे वा नगरे वा रण्णेवा, अप्पं वा बहुं वा अणुं वा थुलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं अदिन्नं गिण्हिज्जा नेवन्नेहिं अदिन्नं गिण्हाविज्जा अदिन्नं गिण्हंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि, तच्चे भंते महव्वए उवट्ठिओमि सव्वाओ अदिन्नादाणाओ वेरमणं ॥ ३ ॥

अहावरे चउत्थे भंते ! महव्वए मेहुणाओ वेरमणं सव्वं भंते ! मेहुणं पच्चक्कामि, से दिव्वं वा माणुसं वा तिरिक्खजोणिअं वा नेव सयं मेहुणं सेविज्जा, नेवन्नेहिं मेहुणं सेवाविज्जा मेहुणं सेवंतेवि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहं तिविहेणं वायाए काएणं न करेमि न कारवेमि करंतंपि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि चउत्थे भंते महव्वए उवट्ठिओमि सव्वाओ मेहुणाओ वेरमणं ॥ ४ ॥

अहावरे पंचमे भंते ! महव्वए परिग्गहाओ वेरमणं सव्वं भंते ! परिग्गहं पच्चक्खामि से अप्पं वा बहुं वा अणुं वा थुलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं परिग्गहं परिगिण्हिज्जा नेवन्नेहिं परिग्गहं परिगिण्हाविज्जा, परिग्गहं परिग्गिण्हंतेवि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए

काएणं न करेमि न कारवेमि करंतपि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि पंचमे भंते ! महव्वए उवट्ठिओमि सव्वाओ परिग्गहाओ वेरमणं ॥ ५ ॥

अहावरे छट्ठे भंते ! वए राइभोअणाओ वेरमणं सव्वं भंते ? राइभोअणं पच्चक्खामि से असणं वा पाणं वा खाइमं वा साइमं वा नेव सयं राइं भुंजेज्जा नेवन्नेहिं राइं भुंजाविज्जा राइ भुंजंते वि अन्ने न समणुजाणामि जावज्जीवाए तिविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि करंतं पि अन्नं न समणुजाणामि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि. ॥ छट्ठे भंते ! वए उवट्ठिओमि सव्वाओ राइभोअणाओ वेरमणं ॥ ६ ॥ प्रशस्त लग्नावसरे नमस्कापूर्वकं त्रिशः "इच्चेइयाइं पंचमहव्वयाइं राइभोअणवेरमणछट्ठाइं अत्तहिअट्ठआए उवसंपजित्ताणं विहरामि ॥१॥

शिष्यः इच्छामो अणुसट्ठिं नमो खमासमणाणं–। क्षमा० इच्छ० भग० तुम्हे अम्ह पंचमहव्वयं राइभोयण वेरमण छट्ठं "आरोवेह"–गुरुः "आरोवेमि" शिष्यः "इच्छं" क्षमा० संदिसह किं भणामि ? गुरुः "वंदित्ता पवेह" शिष्यः इच्छं० क्षमा० इच्छ० भग० तुम्हे अम्ह पंचमहव्वयं राइभोयण वेरमण छट्ठं आरोवियं इच्छामो अणुसट्ठिं। गुरुः आरोवियं २ खमासमणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभयेणं सम्मं धारिज्जाहि अन्नेसिं पवेज्जाहि गुरुगुणगणेहिं वुड्ढिज्जाहि, नित्थारपारगाहोह। शिष्यः "तहत्ति"। क्षमा०

तुम्हाणं पवेइअं संदिसह साहूणं पवेमि। गुरुः "पवेह"। शिष्यः "इच्छं–खमा॰ समवसरणं (नाणं) नमस्कारपूर्वकं त्रि प्रदक्षिणयति। संघो गुरुश्च नवदीक्षितोपरि वासं विधत्तः। शिष्यः क्षमा॰ तुम्हाणं पवेइयं साहूणं पवेइअं संदिसह काउसग्गं करेमि गुरुः "करेह"। शिष्यः "इच्छं॰ क्षमा॰ इच्छ॰ भग॰ तुम्हे अम्ह पंच॰ राइ॰ आरोवावणी स्थिरीकरावणी करेमि काउ॰ अन्नत्थ॰ लोगस्स॰ सागरवर॰ प्रगट लोगस्स॰। क्षमा॰ अविधि आशातना॰। क्षमा॰ इच्छा॰ संदि॰ भग॰ पवेयणा मुहपत्ति पडिलेहुं ?। गुरुः "पडिलेहेह"। मुहपत्ति॰। द्वादशावर्त वन्दनके॥ इच्छा॰ संदि॰ भग॰ पवेयणुं पवेउं ? गुरुः "पवेह"। शिष्यः इच्छं क्षमा॰ इच्छाकारि॰ पंच॰ राइ॰ आरो॰ नंदि॰ वास॰ देव॰ नंदिसूत्र कड्ढा॰ काउ॰ पंच॰ स्थिरी॰ काउ॰ करावणी पाली "तप करश्युं" गुरुः "करज्यो" शिष्यः क्षमा॰ इच्छ॰ भग॰ पसाय करी पचक्खाणनी आश देशोजी। गुरु यथाशक्ति आचाम्लोपवासादिकं प्रत्याख्यानं दत्ते। वन्दनके। इच्छा॰ वेसणे संदिसाहु ? गुरुः संदिसह। शिष्यः इच्छं–क्षमा॰ इच्छा॰ वेसणे ठाउं ? गुरुः "ठाएह"। इच्छं॰ खमा॰ अविधि॰। क्षमा॰ "इच्छ॰ भग॰ पसाउ करी मस दिग्बंध करावोजी"। गुरुः "करेमि" दिग्बन्धः। प्रव्रज्याविधिवत्। क्षमा॰ इच्छ॰ भग॰ सम संतपयाणं करेह॥ मन्त्रप्रदानमपि–प्रव्रज्यावत्॥ खमा॰ इच्छ॰ भग॰ सज्झाय करुं ? गुरुः "करेह"–पूर्ववत्॥ क्षमा॰ इच्छ॰ भग॰ हितशिक्षा प्रसाद करशोजी। गुरुः चत्तारिपरमङ्गाणीत्यादिकं सोपनयं शालिकण पञ्चक ज्ञात विपयकमुपदेशमाचक्षते॥ ततः शिष्यः क्षमा॰ ईर्यापथिकीं प्रतिक्रम्यः

अचित्तरज ओहडावणत्थं काउ० एवं क्षुद्रोपद्रव० काउ० पूर्ववत् ॥ क्षमा० अविधि०—। वन्दनकमित्यादि प्रव्र-ज्या विधिवत् ॥ सप्त मण्डलीप्रवेशार्थं आचाम्लसप्त करणीयं। सप्तमाण्डल्यो यथा—सुत्ते १ अत्थे २ भोयण ३ काले ४ आवस्स अ ५ सज्झाए ६ संथारए चिअ ७ तहा सत्तेव मंडली हुंति ॥ अनेनैव क्रमेणायाम्ल-करणेन शिष्यस्य पूर्वसाधुभिः मण्डली प्रवेशनम् ॥ इति उपस्थापना कीर्तनो नाम विंशतितम उदयः ॥

इति आचार दिनकरस्य प्रथमो भागः ॥

स्नान् विमलीकरोति फलं यथाम्भः कतकद्रुमस्य ॥३७॥ सुतहिबुकवियद्विलग्नधर्मेष्यमरगुरुर्यदि दानवार्चितो वा । यदशुभमुपयाति तच्छुभत्वं शुभमपि वृद्धिमुपैति तत्प्रभावात् ॥३८॥ इत्यनेनानुमानेन नवांशस्यानुसारतः । कार्या षड्वर्गसंशुद्धिः स्थापनादीक्षयोः शुभा ॥३९॥ कार्यमात्यन्तिकं चेत्स्यात्तदा बहुगुणान्वितम् । स्वल्पदोषं समाश्रित्य लग्नं सत्सर्वमाचरेत् ॥ ४० ॥" इत्येवंविधे लग्ने प्रतिष्ठा विधेया । तत्रोत्कृष्टत्वेन धनुःशतं क्षेत्रशुद्धिः, मध्येन धनुःपञ्चाशत् जघन्येन धनुपञ्चविंशतिक्षेत्रशुद्धिर्विधेया । क्षेत्रशुद्धियुक्तिर्यथा—शुद्धमृत्तिकापर्यन्तं भूमिखननं, ततः काष्ठास्थिचर्मकेशनखदन्ततृणामेध्यावकराणां दूरतोपसारणं, तत्र च गौरसुरभिमृत्स्नापरिक्षेपः, ततः उपरि गोमूत्रगोमयस्थापनं, ततो देशे वा तत्र नगरे ग्रामे वा दिनसप्तकममारिघोषणं राज्ञो देशनगराधिपतेः बहुपदादानपूर्वकमनुज्ञाग्रहणं, स्थपतिभ्यो वस्त्रकेयूरकटकमुद्रिकादिदानम् । प्रतिष्ठायां करणीयानि यथा—पञ्चशतयोजनमध्ये गताचार्योपाध्यायसाधुसाध्वीश्राविकाणामाह्वानं कौसुम्भसूत्रकौसुम्भवस्त्ररञ्जनं कुमारीकर्तितसूत्रप्रगुणीकरणं पवित्रस्थानात् समस्तकूपवापीतडागनिर्झरतटिनीविवरिकोज्झवृक्षप्रस्रावजलानयनं गङ्गोदकानयनं च कलशैर्वेदिकारचनं दिक्पालपूजोपकरणस्थापनानि, चतुर्णां स्नपनकराणामुभयकुलविशुद्धानामखण्डिताङ्गानां नीरोगाणां सौम्यानां दक्षाणामधीतस्नपनविधीनां कृतोपवासानां प्रगुणीकरणं, चतसृणां चौषधिपेषणकारिणीनामुभयकुलविशुद्धानां सपुत्रभर्तृकाणां सतीनामखण्डिताङ्गीनां दक्षाणां शुचीनां सचेतनानां प्रगुणीकरणं, दिग्वलयर्थं च नानान्नपक्वान्नपाचनमक्षतपात्रकृता-

भग्नतन्दुलप्रस्थकरणं, सणबीज १ लाज २ कुलत्थ ३ यव ४ कङ्गु ५ माष ६ सर्षप ७ रूपसप्तधान्यमीलनं, धान्य १ मुद्ग २ माष ३ चणक ४ यव ५ गोधूम ६ तिल ७ रूपं सप्तधान्यन्यत्। सण १ कुलत्थ २ मसूर ३ वल्ल ४ चणक ५ व्रीहि ६ चपलक ७ रूपं सप्तधान्यमन्यत्। कर्पूरकस्तूरीश्रीखण्डागरुकुङ्कुमसिल्हक कुष्ठमांसीमुराप्रभृतिगन्धकालागरुदशाङ्गपञ्चाङ्गद्वादशाङ्गद्वात्रिंशदङ्गसिल्हकसर्ज्जरसकुन्दुरकप्रभृतिधूपाः कर्पूरकस्तूरिकापुष्पवासवासितश्रीखण्डचूर्णवासाः सुरससुगन्धपञ्चवर्णपुष्पजात्यानयनं सुवर्णरूप्यप्रवालराजावर्तकमौक्तिकपञ्चरत्नाष्टकसंग्रहः कौसुम्भकङ्कणविंशतिप्रगुणीकरणं श्वेतसर्षपानयनमष्टमसर्षपपोट्टलिकाकरणं सिद्धार्थदधिघृताक्षततन्दुलदूर्वाचन्दनजलरूपार्घप्रगुणीकरणं दर्पणानयनमृद्धिवृद्धिमदनफलसमेतकङ्कणकाष्ठककरणं वेदिचतुष्टयकरणं दशजववारशराववापनं दशजववारशरावकरणं षट्त्रिंशदुत्तरशतमृत्तिकाकलशकरणमेकरूप्यकचोलिकाकरणं सुवर्णशलाकैककरणं नन्द्यावर्तपट्टं श्रीपर्णीमयमेकं तस्य प्रगुणीकरणमाच्छादनपट्टद्वादशहस्तमिताः षट्, एका मातृशाटिका दशहस्ता मुद्ग ५ यव ५ गोधूम ५ चणक ५ तिलमया ५ प्रत्येकं पञ्चपञ्चपञ्चविंशतिकर्करिकाः सर्वे प्रत्येकमाण(ढ)कप्रमाणाः मोदककरणं वाटकरणं क्षैरेयीकरणं करम्बकरणं कृसराकरणं भक्तकरणं घृतखण्डसंमिश्रपोलिकाचूर्णकरणं पूपिकाकरणं प्रत्येकमेतेषां वस्तूनां कृते शरावसम्पादनं तथा नालिकेरक्रमुकद्राक्षाखर्जूरशर्करावर्षोपलवाताम्राम्रातफलवीरण्टकदाडिमबीजपूराम्रेक्षुकदलीफलजम्बीरकरुणाराजादनबदराक्षोटोदारचारकलिकानिमज्जकपिशृङ्गप्रभृत्यार्द्रशुष्कफलानयनं ततो वेष्टितं

रक्तसूत्रं रक्तसूत्रवेष्टितकङ्कणिकाः पञ्चनिरुञ्छनकर्त्र्यः सपुत्रभर्तृकाः कुलीनाश्चतस्रः कञ्चुलिकाचतुष्टयकरणं दीपगर्भशरावदशककरणं घृतगुडसहितमङ्गदीपचतुष्टयं क्रयाणकत्रिशती षष्टिसहिताप्रगुणीकरणं प्रियङ्गु-कर्पूरगोरोचनादीनां हस्तलेपार्थमानयनं घृतभाजनकरणं सौवीरघृतमधुशर्करारूपं नेत्राञ्जनं शलाकार्थं वादि-त्रढक्काहुक्कतालकांस्यतालमृदङ्गपट्टहभेरीझल्लरिद्रगडझर्झरवीणापणवशृङ्गमुखहुडुक्काहलात्रंवकधूमलाप्रियवा-दिकातिमिलाप्रभृतिवादित्रानयनं शङ्खनयनंपूर्णभाजनमेकं वल्लमयपूपकानां शरावाः पञ्च, छगणमूत्रघृत-दधिदुग्धदर्भरूपगव्याङ्गदर्भोदकेन पञ्चगव्यस्नपनं पञ्चगव्यानयनं गजवृषभविषाणोत्पाटितमृत्तिका-वल्मीक-मृत्तिका-राजद्वारमृत्तिका-पर्वतमृत्तिका-नद्युभयकूलनदीसंगममृत्तिकापद्मसरोवरमृत्तिकामोलनं सुवर्णक-लशपञ्चकं तदभावे रूप्यकलशपञ्चकं तदभावे ताम्रमयं मृण्मयं वा क्रयाणकप्रतिबद्धाः पुटिकाः त्रिशतीषष्टि-सहिताः। तेच यथा—अथ प्रतिष्ठोपयोगिनां षष्ट्यधिकत्रिशतसंख्यानां क्रयाणकानां नामानि कीर्त्यन्ते यथा—
मदनफल १ मधुयष्टी २ तुम्बी ३ निम्ब ४ महानिम्ब ५ बिम्बी ६ इन्द्रवारुणी ७ स्थूलेन्द्रवारुणी ८ कर्कटी ९ कुटज १० इन्द्रयव ११ मूर्वा १२ देवदाली १३ विडङ्गफल १४ वेतस १५ निचुल १६ चित्रक १७ दन्ती १८ उन्दरकर्णी १९ कोशातकी २० राजकोशातकी २१ करञ्ज २२ चिरबिल्ल २३ पिप्पली २४ पिप्पलीमूल २५ सैन्धव २६ सौवर्चल २७ कृष्णसौवर्चल २८ बिडलवण २९ पाक्यलवण ३० समुद्रलवण ३१ यवक्षार ३२ रोमक ३३ स्वर्जिका ३४ वचा ३५ एला ३६ क्षुद्रैला ३७ बृहदेला ३८ त्रुटि ३९ महात्रुटि ४० सर्षप ४१

आसुरी ४२ कृष्णसर्षप ४३ इति मदनादिगणः। त्रिवीज ३ आलविनी ४ त्रिफला ५ स्नुही ६ शङ्खपुष्पी ७ नीलिनी ८ रोध्र ९ बृहद्रोध्र १० कृतमाल ११ कम्पिल्लक १२ स्वर्णक्षीरी १३ इति कुम्भादिगणः। कुष्ठ १ बिल्व २ काश्मरी ३ अरणी ४ अरणिका ५ पाटला ६ कुवेराक्षी ७ सेनाक ८ कण्टकारिका ९ क्षुद्रकण्टकारिका १० शालिपर्णी ११ पृश्निपर्णी १२ गोक्षारु १३ देवदारु १४ रास्ना १५ यव १६ शतपुष्पी १७ कुलत्थ १८ माक्षिक १९ पौक्षिक २० क्षौद्र २१ सित्थुक २२ शर्करा कुष्ठादिगणः। ७९। अपामार्ग १ त्रिकटु ४ नागकेशर ५ त्वक् ६ पत्र ७ हरिद्रा ८ राल ९ दारुहरिद्रा १० श्रीखण्ड ११ शोभाञ्जन १२ रक्तशोभाञ्जन १३ मधुशोभाञ्जन १४ मधूक १५ रसांजन १६ हिङ्गुपत्री १७ इति वेल्लादिगणः। ९६। तगर १ बला २ अतिबला ३ इति भद्रदार्वादिगणः। ९९। दूर्वा १ श्वेतदूर्वा २ गण्डदूर्वा ३ जवासक ४ दुरालभा ५ वासा ६ कपिकच्छू ७ क्षुद्रा ८ शतावरी ९ गुञ्जा १० श्वेतगुञ्जा ११ प्रियङ्गु १२ पद्म १३ पुष्कर १४ नीलोत्पल १५ सौगन्धिक १६ कुमुद १७ शालूक १८ वितुन्नक १९ इति दूर्वादिगणः ॥११७॥ जीवन्ती १ काकोली २ क्षीरकाकोली ३ मेद ४ महामेद ५ मुद्गपर्णी ६ माषपर्णी ७ ऋषभक ८ जीवक ९ मधुयष्टी १० इति जीवन्त्यादिगणः ॥१२७॥ विदारी १ क्षीरविदारी २ एरण्ड ३ रक्तैरण्ड ४ वृश्चिकाली ५ पुनर्नवा ६ श्वेतपुनर्नवा ७ नागबला ८ गांगेरुकी ९ सहदेवी १० कृष्णसारिवा ११ हंसपदी १२। इति विदार्यादिगणः। उशीर १ लामज्जक २ चन्दन ३ रक्तचन्दन ४ कालेयक ५ परूषक ६ इति दार्व्यादिगणः ॥१४५॥ पद्मक १ पुण्डरीक २ वृद्धि ३

तुकाक्षीरी ४ सिद्धि ५ कर्कटाशृङ्गी ६ गुडूची ७ इति पद्मकादिगणः ॥१५२॥ द्राक्षा १ कटुफल २ कतक ३ राजादन ४ दाडिम ५ शाक ६ इति परूषादिगणः ॥१५८॥ अञ्जन १ सौवीर २ मांसी ३ गन्धमांसी ४ इति अंजनादिगणः ॥१६२॥ कडका १ पाठा २ पटोल्यादिगणः ॥१६४॥ धान्यक १ गुडूच्यादिगणः ॥१६५॥ काकमाची १ ग्रन्थिल २ किराततिक्त ३ शैलेय ४ सहचर ५ सप्तपर्ण ६ कारवेल्ली ७ बदरी ८ आरग्वधादिगणः ॥१७३॥ बीजक १ तिनस २ भूर्ज ३ अर्जुन ४ खदिर ५ कदर ६ मेषशृंगी ७ लव ८ सिंसिपा ९ ताल १० अगर ११ पलाश १२ शाल १३ क्रमुक १४ अजकर्ण १५ अश्वकर्ण १६ अशनादिगणः ॥१८९॥ वरुण १ मोराट २ अजशृंगी ३ अरुष्कर ४ इतिवरुणादिगणः ॥१९३॥ रूषक १ तुत्थ २ हिंगु ३ कासीस ४ पुष्पकासीस ५ शिलाजतु ६ इति रूषकादिगणः ॥१९९॥ वेल्लंतर १ वृकस्थल २ पाषाणभेद ३ इक्वंटा ४ कास ५ इक्षु ६ नल ७ दर्भ ८ शितवार ९ मर्क १० पिप्पली ११ सुवर्चला १२ इन्दीवर १३ इति वेल्लंतरादिगणः ॥२१२॥ जिंगिणी १ सरल २ कदली ३ अशोक ४ एलवालुक ५ सल्लकी ६ रोध्रादिगणः ॥२१८॥ अर्क १ अलर्क १ विशल्या ३ भारंगी ४ ज्योतिष्मती ५ कटभी ६ श्वेतकटभी ७ इंगुदी ८ इति अर्कादिगणः ॥२२६॥ सुरसा १ श्वेतसुरसा २ फणिज्जक ३ कृष्णकुबेर ४ कुबेर ५ महवक ६ अजकर्णी ७ क्षुवक ८ कपित्थपत्री ९ नदीकान्त १० काकमाची ११ आवसु १२ केशमुष्टि १३ भूतृण १४ निर्गुंडी १५ इति सुरसादिगणः ॥२४१॥ मुष्कक १ इति मुष्ककादिगणः ॥२४२॥ अतिविषा १ जीरक २ उपकुंचिका ३ कृष्णजीरक ४

॥१५०॥

अजमो ५ अजमोद ६ चव्य ७ वत्सकादिगणः ॥२४९॥ पुष्करपत्री १ मंजिष्ठा २ शाल्मलि ३ मोचरस ४ सुनन्दा ५ धातकी ६ प्रियंग्वादिगणः ॥ ॥२५५॥ अंबष्ठा १ नंदी २ कच्छुरा ३ इति अंबष्ठादिगणः ॥२५८॥ भल्लातक १ मुस्तादिगणः ॥२५९।२६०॥ वट १ पिप्पल २ उदुंबर ३ जंबू ४ राजजंबू ५ काकजंबू ६ कपीतन ७ आम्र ८ पियाल ९ तिंदुक १० इति न्यग्रोधादिगणः ॥२७०॥ तुरुष्क १ वालक २ नेत्रवालक ३ अधःपुष्पी ४ क्षेमक ५ त्वचा ६ तमालपत्र ७ थोयेयक ८ नख ९ श्रीवेष्ट १० कुन्दुरुक ११ कुंकुम १२ गुग्गुल १३ एलादिगणः ॥ २८३ ॥ सातला १ वृषगंधा २ पीलु ३ श्यामादिगणः ॥ २८६ ॥ त्रायमाण १ खटी २ सोमराजी ३ श्रावणी ४ महाश्रावणी ५ शमी ६ मंडूकपत्री ७ हपुषा ८ काकनाशा ९ काकजंघा १० पर्यटक ११ विषचारि १२ राजहंस १३ पुष्करमूल १४ अश्मन्तक १५ कोविदार १६ रोहितक १७ वंश १८ वेणु १९ अंकोल्ल २० कौंडिन्य २१ फल्गु २२ श्लेष्मातक २३ तिंतिडीक २४ अम्लवेतस २५ कपित्थ २६ केशाम्र २७ नालिकेर २८ सचलिंद २९ खर्जूर ३० बीजपूर ३१ नारिंग ३२ जंभीर ३३ निंबुक ३४ आम्रातक ३५ पालेवत ३६ मदनफल ३७ आरुक ३८ वीर कुरंटक ४० अक्षोट ४१ चांगीरी ४२ अम्लिका ४३ करीर ४४ काकंडी ४५ वास्तुक ४६ कुसुंभ ४७ लाक्षा ४८ लांगली ४९ मिश्रेया ५० गंडरीक ५१ काकसी ५२ वरुणा ५३ मूलक ५४ तंडुलीयक ५५ द्रोणपुष्पी ५६ तामलकी ५७ ब्राह्मी ५८ ब्रह्मजीरी ५९ अरिष्ट ६० पुत्रजीव ६१ सहदेवी ६२ कूष्मांडक ६३ महातुंबी ६४ चिर्भटी ६५ कटुचिर्भटी ६६ शुनिकर्ण ६७ अहिमार ६८ विष्णु-

वास ९ कचूर १० कुष्ठ ११ एला १२ तज १३ तमालपत्र १४ नागकेशर १५ लवंग १६ कंकोल १७ जाइफल १८ जातिपत्रिका १९ नख २० चंदन २१ सिल्हक २२ वीरण २३ शोभांजनमूल २४ ब्राह्मी २५ शैलेय २६ चंपकफल २७ इति सर्वौषधिप्रथमवर्गानयनम्। सहदेवी १ वला २ कुष्ठं ३ प्रियंगु ४ स्वत्वक् ५ च गालवः ६। दर्भमूलं ७ तथा दूर्वा ८ सर्वौषध्य उदाहृताः ॥ १ ॥ इति द्वितीयसर्वौषधिवर्गः। विष्णुक्रान्ता १ शंखपुष्पी २ वचा ३ चव्यं ४ यवासकम् ५। भर्मरी ६ भृंगराजश्च ७ वासा ८ चैव दुरालभा ९ ॥ १ ॥ भाङ्गी १० प्रियंगु ११ रास्ना १२ च राठा १३ पाठा १४ महौषधम् १५। वत्सकः १६ सहदेवी १७ च स्थिरा १८ नागबला १९ वरी २० ॥ २ ॥ दूर्वा २१ वीरण २२ मुंजौ २३ च मुस्ता २४ लामज्जकं २५ जलम् २६। जीवन्ती २७ रुदती २८ ब्राह्मी २९ चतुःपत्री ३० तथांबुजम् ३१ ॥ ३ ॥ जीवक ३२ र्षभकौ ३३ चैव मेदश्चैव ३४ महापरः ३५। वासन्ती ३६ मागधी ३७ मूलं ३८ जपा ३९ भृंगी ४० सल्लकी ४१ ॥ ४ ॥ नकुली ४२ मुद्गपर्णी ४३ च माषपर्णी ४४ च तिंतिडी ४५। श्रीपर्णी ४६ कृष्णपर्णी च जाति ४७ मंडूकपर्णिका ४८ ॥ ५ ॥ राजहंसो ४९ महाहंसः ५० श्रीफलो ५१ मकरंदकः ५२। शोभांजनो ५३ र्जुनश्चैव ५४ कर्पासः ५५ पिप्पलो ५६ वटः ५७ ॥ ६ ॥ फल्गुः ५८ प्लक्षः ५९ सिंदुवारः ६० करवीरश्च ६१ वेतसः ६२। कदंबः ६३ कंटशैलश्च ६४ कल्हारो ६५ राट ६६ इत्यपि ॥ ७ ॥ वरुणो ६७ बीजपूरश्च ६८ मेषशृंगी ६९ पुनर्नवा ७०। वज्रकंदो ७१ विदारी ७२ च शृगाली ७३ रजनीद्वयम् ७४ ॥ ८ ॥ चित्रकं ७५ नलमूलं ७६ च कोरण्टः ७७ शतपत्रिका ७८। कुमारी ७९ नागद-

मनी ८० गौरी ८१ निंबश्च ८२ शाल्मलिः ८३ ॥ ९ ॥ कृतमालश्च ८४ मंदार ८५ इंगुदी ८६ शाल ८७ इत्यपि । शरपुंखा ८८ श्वगन्धा ८९ च वज्रशूलं ९० मयूरकः ९१ ॥ १० ॥ भूतकेशी ९२ रुद्रजटा ९३ रक्ता ९४ च गिरिकर्णिका ९५ । पातालतुंग्य ९६ तिविषा ९७ वज्रवृक्षश्च ९८ शाबरः ९९ ॥ ११ ॥ चक्षुष्या १०० च लज्जिरिका १०१ लक्ष्मणा १०२ लिंगलांछना १०३ । काकजंघा १०४ पटोल १०६ श्च सुरा १०६ तेजोवती १०७ तथा ॥ १२ ॥ कनकद्रुश्च १०८ भूनिंब १०९ एतेषां मूलमुत्तमम् । शतमूलमिति ख्यातं मिलितं शास्त्रवेदिभिः ॥ १३ ॥ इति शतमूलम् । शतावरी १ सहदेवी २ शिरा ३ जीवा ४ पुनर्नवा ५ । मयूरकः ६ कुष्ठ ७ वचे ८ सहस्रं मूलमुच्यते ॥ १ ॥ सहस्रसंख्या वृक्षाणां जातेर्मूलाभिसंग्रहात् । सहस्रमूलमुद्दिष्टमिति कैश्चिन्निगद्यते ॥ २ ॥ इति सहस्रमूलवर्गः ॥ दधि १ दुग्धं २ घृतं ३ चेक्षुरसं ४ पञ्चममंबु ५ च । आर्हतानां मते पञ्चामृतमेतन्निगद्यते ॥ १ ॥ इति पञ्चामृतम् । तथा च वेदिघटानयने तीर्थजलानयने वेदिस्थापने औषधिवर्तने सर्वेष्वेपु स्थानेषु गीतनृत्यवादित्रबहुलो महानुत्सवो विधेयः ॥ इति प्रतिष्ठासामग्री संपूर्णा ॥

प्रतिष्ठाविधिरादिष्टः पूर्वं श्रीचन्द्रसूरिभिः । संक्षिप्तो विस्तरेणायमागमार्थाद्वितन्यते ॥ १ ॥ प्रतिष्ठाकारयितुर्गृहे प्रथमं शान्तिकं पौष्टिकं कुर्यात् । अतश्चश्रीचन्द्रसूरिप्रणीता प्रतिष्ठायुक्तिः, महाप्रतिष्ठाकल्पापेक्षयाल्पतरेति ज्ञायते । ततः श्रीआर्यनन्दिक्षपकचन्दनन्दिइन्द्रनन्दीश्रीवज्रस्वामिप्रोक्तप्रतिष्ठाकल्पदर्शनात् सविस्तरा लिख्यते । यथा—तत्र नवनिष्पन्नबिम्बं शुभदिने शुभशकुनैः सुपवित्रं कृतान्तश्चंदनलेपनं बहिः-

सुधापङ्कितं चन्द्रोदयविराजितच्छदि सधवाकृतसहरिद्रोदकं तन्दुलचूर्णमण्डनं चैत्यं समानयेत्। लघुगृहपूजाविम्बं च एतदुक्तसंस्क्रियं गृहमानयेत्। ततः स्थिरविम्बस्याधः पञ्चरत्नं कुम्भकारचक्रमृत्तिकासहितं स्थापयेत्। चलविम्बस्याधस्तु पूतलुदीवालुकां समूलं गोकर्णमात्रदर्भं च स्थापयेत्। पूर्वं येभ्यो येभ्यो जलाशयेभ्यो महोत्सवेन जलमानीयते, तेषु तेषु गन्धपुष्पधूपदीपनैवेद्यबलिपूजनमन्त्रपूर्वकं विधाय ततो जलमानयेत्। मन्त्रो यथा—ॐ वं वं वं नमो वरुणाय पाशहस्ताय सकलयादोधीशाय सकलजलाध्यक्षाय समुद्रनिलयाय सकलसमुद्रनदीसरोवरपर्वतनिर्झरकूपवापीस्वामिने अमृताङ्गकाय देवाय अमृतं देहि २ अमृतं झर २ अमृतं स्रावय २ नमस्ते स्वाहा गन्धं गृहाण २ पुष्पं गृहाण २ धूपं गृहाण २ दीपं गृहाण २ नैवेद्यं गृहाण २ बलिं गृहाण २ जलं देहि २ स्वाहा। ततो मण्डपमध्ये वेदिरचना, वेदिस्थापनवेदिप्रतिष्ठाविधिर्विवाहाधिकाराद्वसेयः। वेदिमध्ये चलविम्बस्थापनम्, स्थिरविम्बं तु तथैव जलपट्टोपरि स्थापयेत्, वेदिमध्ये त्वन्यच्चलविम्बं देववन्दनाप्रथमपूजाकर्मार्थं स्थापयेत्। तत्पार्श्वेषु श्वेतवारकोपरि यववारकनिवेशनं चतुर्दिक्षु तथा च गोधूमचूर्णमयघृतगुडसहितकौसुम्भसूत्रवर्त्तियुक्तमङ्गलदीपचतुष्टयस्थापनं चतुर्दिक्षु वेद्यन्तरालेषु, वेदिस्थापनं तु चैत्ये मण्डपकोणचतुष्के गृहे गृहे त्वङ्गणे वेद्यामष्टासु दिक्षु दिक्पालस्थापनं, वेदिबहिर्भागे संक्षिप्तपूजा च लघुस्नात्रविध्यनुसारेण, स्नात्रकाराः पूर्वोक्ताश्चत्वारः तत्र समानेयाः, पूर्वोक्ताश्चतस्रो नार्यः सकङ्कणाः कषायमांगल्यमूलीअष्टकवर्गसर्वौषधिशतमूलीसहस्रमूलीपेषणं पवित्रविधिना सोत्सवं कुर्वन्ति। तानि पञ्चरत्नमूलि-

कादीनि संपिष्य पृथक् शरावकेषु संस्थाप्य उपर्यन्यशरावान् दत्वा कौसुम्भसूत्रेण संवेष्ट्य तदुपरि नामानि लिखित्वा स्थापयेत् । एका च कुमारी पक्षद्वयविशुद्धा स्नाता कृतालंकारा सकंकणा सौवीरघृतमधुशर्करासहितं नेत्रांजनं पिनष्टि । ततश्च रूप्यकच्चोलिकायां विन्यस्य शरावसंपुटे संस्थाप्यं, तस्यै च कौशेयकंचुलिका देया । ततः स्नात्रकारा वर्णानुसारेण जिनोपवीतोत्तरीयोत्तरासंगभृतः कृतधम्मिल्लाः शुचिवस्त्रप्रावरणाः कृतोपवासाः सकंकणमुद्रिकाः समीपस्था विधेयाः, प्रतिष्ठागुरुश्च कृतोपवासः सदशश्वेतवस्त्रभृतकँकणालंकृतप्रकोष्ठः स्वर्णमुद्रांकितसावित्रीकः स्नात्रकारचतुष्टययुक्तः चतुर्विधश्रमणसंघसहितः सर्वदिक्षु भूतबलिं ददाति, बकुलपूपादिसर्ववस्तु दिक्षु निक्षिपति । भूतबलिमंत्रो यथा-"ॐ सर्वेपि सर्वपूजाव्यतिरिक्ता भूतप्रेतपिशाचगणगंधर्वयक्षराक्षसकिंनरवेतालाः स्वस्थानस्था अमुं बलिं गृह्णन्तु, सावधानाः सुप्रसन्नाः विघ्नं हरन्तु, मंगलं कुर्वन्तु" अनेन गुरुरिति भूतबलिं दत्वा, स्नात्रकारवपूंषि कवचमन्त्रेण कवचयति। कवचमन्त्रो यथा-ॐ नमो अरिहंताणं शिरसि, ॐ नमो सिद्धाणं मुखे, ॐ नमो आयरियाणं सर्वांगे, ॐ नमो उवज्झायाणं आयुधम् ॐ नमो लोए सव्व साहूणं इति दक्षिण हस्तेन कवची करणं-ततः स्नात्रकाराः लघु स्नात्र विधिना स्नात्रं कुर्वन्ति । आरात्रिकादि च कुर्वन्ति ॥ (पानु ६०-६२)

बीजा केटलाक प्रतिष्ठा कल्पमां खात विधि तथा शिला स्थापन विधि विस्तार आपेलो नथी. एटले उपयोगी होवाथी ते लखवामां आवे छे.

॥ चैत्य प्रतिष्ठामां भूमि पूजन खातविधि-शिला न्यास-
प्राथमिक मुख्य अंगो छे

प्रासादा वीतरागस्य, पुरमध्ये सुखावहाः । गुरुकल्याण कर्तार-श्चतुर्दिक्षु प्रकल्पयेत् ॥

जे भूमि उपर चैत्य बनाववुं होय ते भूमिनी परीक्षा करवी. शुद्ध-शल्य वगरनी-वृद्धि करनारी-नक्की करी वृषभ चक्र-सुती जागती वि. जोई शुभ मुहूर्त नक्की करेल खुणामां खात करवुं. प्रथम विधि पूर्वक स्नात्र भणावी-अक्षत मिश्रित पुष्पादि लई पंचरत्नादि युक्त कुंभ स्थापन करवो. संक्षिप्त-ग्रह पूजन दिक्-पालपूजन अष्टमंगल-करवा-पूर्वादि दिशामां अर्घ्य आपवा-दिकपालना नाम पूर्वक....आगच्छ २ अर्घ्यं प्रतीच्छ २ स्वाहा.

आरती मंगल दीवो शांति कणश करी. शांति जलनो भूमिमां छंटकाव करे-पूर्ण कणश लई समस्त भूमिमां प्रदक्षिणा आपे. जे पुरुष खात करवाना होय तेने वज्र पंजर-अंगरक्षा करे भूमिमां मध्यभागे उभो रही वास्तु पुरुषनुं आह्वाहन करे ते नीचे प्रमाणे—

ॐ वास्तोष् पतये ब्रह्मणे नमः । इह आगच्छ २ स्वाहा-तिष्ठ २ स्वाहा-पूजां प्रतीच्छ २ स्वाहा ।.... चन्दनं समर्पयामि स्वाहा-पुष्पाणि-धूपं-दीपं-वस्त्रं-फलं, नैवेद्यं अक्षतादिकं-समर्पयामि स्वाहा-ऐम दरेक वस्तु समर्पे-हाथ जोडी प्रार्थना करे.

वास्तुपुरुष नमस्तेऽस्तु, भूमिशय्यारत प्रभो, मच्चैत्यं सम्पूर्णं समृद्धं कुरु २ स्वाहा ॥

वास्तु-विसर्जन करे-विसर विसर पुनरा गमनाय स्वाहा.

खात-करवानी वस्तु-साधनो-(कोदाली वि०) शुद्ध करी जे स्थाने खोदवानुं होय त्यां खोदवानी-मूहूर्तें शरुआत करे. पछी केसर चंदन छांटे वाजिंत्र वगाडे यथा शक्ति प्रभावना करे. खाडो पाणी नीकणे त्यां सुधी अथवा :कठण पत्थर नीकणे त्यां सुधी खोदवो. शुभ मुहूर्तें शीला स्थापन नीचे प्रमाणे विधि पूर्वक करे.

## कूर्म प्रतिष्ठा विधिः (प्रतिष्ठा कल्पोक्त)

चैत्यकर्म विधावत्र, कूर्मो भूमौ निधीयते । यत्पीठनिहितं चैत्यं, चिरस्थायि भवेद् ध्रुवम् ॥१॥

भा० टी०—चैत्य कार्यना निर्माणमां नीचे भूमिमां कूर्म स्थापित करी तेनी पीठ उपर चैत्य बनाववाथी ते स्थिर अने चिरस्थायी बने छे.

सामग्री—सोनानो काचबो १ । पंचरत्ननी पोटली ९ । माटीना कलशिया ५ । कलशियानां ढांकणां ९ । उपशिला-शिलाओनां संपुट ५ । सात धान्य कोरां मुठ्ठि ५ । सातधान्यना बाकला थाली १ । स्नात्र-पूजानो सामान । पंचामृतनो कलशियो १ । पुष्प सर्व जातनां । फल सूकां-लीलां । डाभनी शली ५ । ५ । जलनो कलश १ । कूर्मने ओढाववानुं वस्त्र-हाथ १ । सिंहासन १ । पंचतीर्थीप्रतिमा १ । आरीसो १ ।

दीवो फाणसमां १ । आरती भरेली १ । दीवासलीनी पेटी १ । मंगलदीवो भरेलो १ । न्हाना कलशिया ४ । गेवासूत्र कोयो १ । स्नात्रकार ४ । धोतियां उत्तरासण ४, ४ । प्रक्षालनी कुंडी १ । अंग लूंछणां ३ । वाला कुंची १ । पाट म्होटो १ शिलाओना अभिषेक माटे ॥

विधि—कूर्म प्रतिष्ठाविधि प्रतिष्ठा कल्पोमां नीचे प्रमाणे मले छे, जे स्थानमां कूर्म स्थापवो होय त्यां मुहूर्तना दिवसे प्रथम पूर्व प्रतिष्ठित प्रतिमा सिंहासन उपर पधरावी स्नात्र पूजा भणाववी, आरती उतारवी, मंगल दीवो करवो, अने पछी त्यां चैत्यवंदन करवुं. जे जिनना नामथी कूर्म प्रतिष्ठानुं मुहूर्त होय ते जिननुं चैत्यवंदन बोलवुं, कदापि ते तीर्थंकरनुं चैत्यवंदन याद न होय तो—'ॐ नमः पार्श्वनाथाय विश्वचिन्तामणीयते ।' इत्यादि चैत्यवंदन कहीने "नमुत्थुणं" कही उभा थई ३ स्तुतिओ कह्या पछी 'श्रीशान्तिनाथ आराधनार्थं काउसग्ग करुं ? इच्छं, श्रीशान्तिनाथ आराधनार्थं करेमि काउसग्गं, वंदण वत्तियाए०' इत्यादि पूरो पाठ बोली १ नवकारनो काउ० पारी नमोऽर्हत्० कही—

श्रीमते शान्तिनाथाय, नमः शान्तिविधायिने । त्रैलोक्यस्याऽमराधीश-मुकुटाभ्यर्चितांह्ये ॥१॥

ए स्तुति कहेवी, पछी सुअदेवयाए करेमि काउसग्गं, अन्नत्थ० १ नोकारनो काउ० पारी नमोऽर्हत्० स्तुति—

यस्याः प्रसादमतुलं, संप्राप्य भवन्ति भव्यजननिवहाः । अनुयोगवेदिनस्तां, प्रयतः श्रुतदेवतां वन्दे ॥२॥

ए स्तुति कही, पछी श्रीशान्तिदेवयाए करेमि काउसग्गं, अन्नत्थ० १ नोकारनो काउ० नमोऽर्हत् स्तुति—
उन्मृष्टरिष्ठ-दुष्ट-ग्रहगतिदुःस्वप्नदुर्निमित्तादि । संपादितहितसंपन्नामग्रहणं जयति शान्तेः ॥३॥
कही, श्रीशासनदेवयाए करेमि काउसग्गं, अन्नत्थ० १ नोकारनो काउ० नमोऽर्हत्० स्तुति—
या पाति शासनं जैनं, सद्यः प्रत्यूहनाशिनी । साभिप्रेतसमृद्ध्यर्थं, भूयात् शासनदेवता ॥४॥
कही, अम्बादेवीए करेमि काउसग्गं, अन्नत्थ० १ नोकारनो काउ० नमोऽर्हत्० स्तुति०—
अम्बा बालांकिताङ्कासौ, सौख्यख्यातिं ददातु नः । माणिक्यरत्नालङ्कार-चित्रसिंहासनस्थिता ॥५॥
कही, खित्तदेवनाए करेमि काउसग्गं, अन्नत्थ० नवकारनो काउ० नमोऽर्हत्० स्तुति—
यस्याः क्षेत्रं समाश्रित्य, साधुभिः साध्यते क्रिया । सा क्षेत्रदेवता नित्यं, भूयान्नः सुखदायिनी ॥६॥
कही, अधिवासना देवीए करेमि काउसग्गं, अन्नत्थ० १ लोगस्स सागर वरगंभीरा सुधीनो काउ० नमोऽर्हत्० स्तुति—

पातालमन्तरिक्षं, भवनं वा या समाश्रिता नित्यम् । साऽत्रावतरतु जैने, कूर्मे ह्यधिवासना देवी ॥७॥
कही, समस्तवेयावच्चगराणं सम्मदिट्ठिसमाहिगराणं करेमि काउ० अन्नत्थ० १ नोकारनो काउ० नमोऽर्हत्० स्तुति—

सर्वे यक्षाम्बिकाद्या ये, वैयावृत्यकराः सुराः । क्षुद्रोपद्रवसंघातं, ते द्रुतं द्रावयन्तु नः ॥८॥

कह्यी पछी उभां उभां १ नवकार पूरो गणी बेसीने 'नमुत्थुणं' कहेवो. 'जावंति चेइआइं० जावंतकेविसाहू० नमोऽर्हत्० स्तवनने स्थाने 'शान्ति शान्ति निशान्तं' इत्यादि लघुशान्ति स्तव कहीने 'जयवीयराय' पूरा कहेवा. ते पछी स्नात्रनुं अभिषेकजल ते वास्तु भूमिमां बधे छांटवुं, दश दिक्पालोनुं आह्वान करी बलिक्षेप करवो, अने ते पछी स्थापनीय शिलासंपुटो तैयार करवा, जो प्रासाद पाषाणनो बनाववो होय तो शिलाओ पाषाणनी अने इंटोनो बनाववो होय तो शिलाओ पण इंटोनी तैयार करवी अने वास्तुभूमिना ४ खूणा-ओमां ४ अने मध्यमां १, आम ५ खाडा शिलाओ करतां कइंक म्होटा खणावीने राख्या होय ते प्रत्येक म्होटा खाडाने नीचे मध्यमां एक एक न्हानो खाडो खणाववो. आ न्हाना खाडाओमां १-१ माटीनो न्हानो कलशियो (कुलडुं) सात धान्य अने पंचरत्न सहित मूकवो, कलशिआ उपर माटीनुं ढांकणुं देवुं अने ते उपर लग्न समय आवतां शिला संपुटो थापवा, शिलासंपुटो जे उपर-नीचे बे बे शिलाओ राखीने करेला होय तेओने प्रथम स्नात्र जल वडे पखालीने पछी नाल वाला कलेशोथी शुद्ध जले अभिषेक करी केसर चंदननुं विलेपन करवुं अने जे शिलासंपुट जे खाडामां स्थापवानो होय ते त्यां लइ जवो, जो संपुटो वधारे भारे होय अने मुहूर्तना समयमां बराबर जमावीने स्थिर करतां लग्ननो समय निकली जवानो भय होय तो नीचे डाभनी १-१ शली मूकीने संपुटो पोतपोताना खाडामां बराबर जमावी देवा अने ज्यारे स्थापनानो समय आवी पहोंचे त्यारे नीचेथी डाभनी शिलाओ काढी लेवी. शिलासंपुटो ए वास्तवमां ५

शिलाओ छे, अने आ शिलाओनां नाम अनुक्रमे १ नन्दा, २ भद्रा, ३ जया, ४ विजया अने ५ पूर्णा छे अने आनी स्थापना अनुक्रमे १ आग्रेयी,* २ नैर्ऋती, ३ वायवी, ४ ऐशानी, ए दिशाओमां अने मध्यमां करवी. मध्यमां प्रतिष्ठाप्य पूर्णा शिला उपर निम्न मुख वालो कूर्म (काचबो) अने त्रण रेखा वाली श्रेष्ठ कोडी, आ बे वस्तुओ स्थापन करवी. कूर्म बनतां सुधी सोनानो बनाववो, के जेथी वास्तु भूमिमां शल्य दोष होय तो ते टली जाय, कूर्मने पंचामृत वडे अभिषेक करीने पछी शिला उपर स्थापवो, लग्ननो समय आवे त्यारे उपर्युक्त क्रम प्रमाणे ज बधी शिलाओ प्रतिष्ठित करवी अने उपर वासक्षेप नाखीने शिलाओनी प्रतिष्ठा करवी. मध्यशिला उपर कूर्म स्थापन करतां—

"ॐ ह्रीँ श्रीँ कूर्म तिष्ठ तिष्ठ देवगृहं धारय धारय स्वाहा" आ मंत्र बोली उपर वासक्षेप नाखवो, कूर्म प्रतिष्ठा–देवगृह, प्रासाद, रथशाला, गृह आदि दरेक वास्तुना निर्माणमां थवी जोइये, जेमां कूर्म प्रतिष्ठा करवी होय ते वास्तुनुं नाम मंत्र मध्ये बोलवुं, कूर्म प्रतिष्ठित करी वासक्षेप कर्या पछी सोभाग्य १, सुरभि २, प्रवचन ३, कृतांजलि ४, अने गरुड ५, आ पांच मुद्राओ देखाडवी, पछी इरियावही पडिक्कमवा पूर्वक पूर्वोक्त विधि प्रमाणे संपूर्ण चैत्यवंदन करवुं. आ चैत्य वंदनमां छट्ठी स्तुति कह्या पछी–श्री प्रतिष्ठा देवतायै

* विष्णु संहितामां आग्नेयी दिशानो अर्थ गृहद्वारनो जमणो भाग, आवो कर्यो छे, जेम के–
"पुनः कृष्टेष्टकाधानं, कुर्याद् द्वारे तु कल्पिते । द्वारस्य दक्षिणे भागे, कर्तव्या प्रथमेष्टिका ॥"

करेमि काउसग्गं, अन्नत्थ० इत्यादि कहीने १ लोगस्स सागरवरगंभिरा सुधीनो काउस्सग्ग करी पारीने नमोऽर्हत् कही–

"यदधिष्ठिताः प्रतिष्ठाः, सर्वाः सर्वास्पदेषु नन्दन्ति। जैनं कूर्मं सा विशतु, देवता सुप्रतिष्ठमिदम् ॥"

आ स्तुति कहेवी. शेष विधि प्रथम प्रमाणे करवी. चैत्यवंदन विधि कर्या बाद अक्षतांजलि भरीने–

"जह सिद्धाण पइट्ठा, तिलोकचूडामणिम्मि सिद्धिए। आचंदसूरियं तह, होउ इमा सुपइट्ठत्ति ॥१॥

जह सग्गस्स पइट्ठा, समत्थलोयस्स मज्झयारम्मि। आचंदसूरियं तह, होउ इमा सुपइट्ठत्ति ॥२॥

जह मेरुस्स पइट्ठा, दीवसमुद्दाण मज्झयारम्मि। आचंदसूरियं तह, होउ इमा सुपइट्ठत्ति ॥३॥

जह जंबुस्स पइट्ठा, जंबुदीवस्स मज्झयारम्मि। आचंदसूरियं तह, होउ इमा सुपइट्ठत्ति ॥४॥

जह लवणस्स पइट्ठा, समत्थउदहीण मज्झयारम्मि। आचंदसूरियं तह, होउ इमा सुपइट्ठत्ति ॥५॥

आ मंगल गाथाओ भणी अक्षताञ्जलि कूर्म उपर नाखवी, स्नात्रकारोए अक्षतांजलि उपरान्त पुष्पांजलि पण नांखवी, ते पछी कूर्म उपर वस्त्राछादन करी ज्यारे बाजुमां ईंटो चणीने उपर शिला अथवा पत्थरनुं पाटियुं ढांकी देवरावबुं के जेथी कूर्म उपर शिला आदिनुं दबाण न आवे.

## परिच्छेद ४. शिलान्यास विधि :

वास्तूनां पादरूपिण्यः, शिलान्यस्ता विधानतः । चिरायुष्कत्वकारिण्यो, वेश्मनां भर्तुरप्यथ ॥१०॥

भा० टी०—शिलाओ वास्तु (घर, मंदिर आदि)ना पाया रूप गणाय छे, तेथी शिलाओ विधि पूर्वक स्थापन करवाथी घर तथा घरस्वामीनुं दीर्घायुष्य करनारी थाय छे.

सामग्री—शिला ४–५ अथवा ९, उपशिला ४–५ अथवा ८, निधिकलश ४–५ वा ९, पंचरत्न पोटली ४–५ वा ९, वस्त्रो ४–५ वा ९ हाथहाथनां, तेमां (४ शिलापक्षे-रातुं, श्याम, नीलुं अने श्वेत, ५ शिलापक्षे–रातुं, श्याम, नीलुं अने २ श्वेत अने ९ शिलापक्षे–रातुं, श्याम, नीलुं, कालुं, आस्मानी, पीलुं अने ३ श्वेत), गेवासूत्र कोयो १, सातधानना वधिवाकला थाली १, शुद्ध जले भरेला घडा २, अभिषेक योग्य कलशिया ४, कांसानी थाली १, वेलण १, म्होटो पाट १ (वेदीना बदलामां) सर्वौषधि चूर्ण पडिकुं १, शिलालूंछणां वस्त्र ३, रुई (दीवेट माटे), पुंभो १, घसेला केसरनी वाटकी २, दीवो १, धूपधाणुं १, गंगाजल, तीर्थजल, अक्षत, सोना-रूपा वा तांबानो कूर्म १, घृत (दीवा तथा निधिकलशने योग्य), दूध, दहि, साकर, दशांग धूप पडिकुं १, अगरबत्ती पडिकुं १, पुष्पो सुगंधि पूजायोग्य, वासक्षेप पडिकुं १, गृहपति १, शिल्पी १, स्नात्रकार १ अने रत्न धातु आदिनी ९ पोटलीओ.

शिलाभिषेक–शिलाओनो प्रथम अभिषेक करी पछी छे यथास्थान प्रतिष्ठित करवी जोइये, ज्यां शिला-

न्यास करवानो होय ते वास्तुभूमिना ईशान अथवा नैर्ऋत कोणमां अेक चोरस वेदी बनाववी, वास्तुमाने जेवडी शिलाओ होय तेने अनुसार अभिषेकवेदी बनाववी, शिलाओ ४-५-८-९ पैकी केटली छे. अने तेओनुं दैर्घ्य-विस्तार केटलो छे, अे बधो विचार करीने शिलाओ सारी रीते रही शके तेवा प्रमाणमां वेदी बनावीने ते उपर शिलाओ-उपशिलाओ अने कलशोनो अभिषेक करवो. अभिषेक सोनाना, रूपाना, त्रांबाना अथवा माटीना ५ कलशो वडे करवो, ओछामां ओछा १ कलशथी पण अभिषेक करी शकाय छे. गंगा, जमना, नर्मदा, सरस्वती, आदि महानदियो तथा शुभ तीर्थोनां शुद्ध जलो यथालाभ प्राप्त करी अभिषेकना जलमां मेलववां, जलमां सर्वौषधि चूर्ण, सुवर्ण रज, सुगंधि द्रव्यो अने सुगंधि पुष्पो नाखीने ते जलना भरेला म्होटा घडा उपर वस्त्राछादन करी उपर हाथ देइ बृहच्छान्तिनो अखंड पाठ बोलवो अने ते पछी ते जल वडे अभिषेकना कलशो भरवा. शिलाओ, उपशिलाओ अने निधिकलशो वेदी उपर प्रथम यथास्थान गोठवी देवा, वेदीना अभावे लाकडानो म्होटो पाट गोठवीने ते उपर त्रांबा पीतलनी कथरोटो गोठवी तेमां शिलाओ राखीने पण अभिषेकनुं कार्य करवुं. बधी तैयारी थइ गया पछी स्नातविलिप्त स्थपति अथवा गृहपति हाथमां जलकलश लेइने-

"ॐ हिरण्यगर्भाः पाविन्यः, शुचयो दुरितच्छिदः । पुनन्तु शान्ताः श्रीमत्य, आपो युष्मान् मधुच्युतः ॥१॥"

आ मंत्रश्लोक बोली नन्दा शिलानो अभिषेक करे, अे ज प्रकारे प्रत्येक वार कलश भरी उपरनो मंत्र

बोली अनुक्रमे 'भद्रा' आदि बधी शिलाओनो अभिषेक करे. शिलानी साथेज तेनी उपशिला तथा निधि कलशनो पण अभिषेक करी लेवो, बधी शिलाओना अभिषेक थइ गया पछी शुद्ध जले पखाली अने शुद्ध वस्त्रे लूंछीने शिलाओ कोरी करी उपर घसेला केसर चंदनना छांटा नाखवा, धूप उखेववो, पुष्पो चढाववां अने दिशापालोना वर्णानुसारि वर्णनां वस्त्रो ओढाडवां, ते पछी उपशिला, शिलायुगलो तथा निधि कलशो पोतपोताना स्थापना स्थाने पहोंचाडवां, एम प्रतिष्ठा करवा माटे तैयार राखवां.

शिलान्यास करतां पहेलां नीचेना श्लोको बोलीने खाडाओमां त्यां रत्न–धात्वादिनो न्यास करवो. रत्नो, धातुओना ककडाओ, औषधिओ तथा धान्योनी वानीओ लाल वा पीला शुद्ध वस्त्रखंडोमां बांधीने राखवी, ८ पोटलीओमां दरेकमां १–१ रत्न, धातु खंड, औषधी, धान्यवानी मूकवी अने ९ मी पोटली आ बधी चीजोनी बांधवी अने मुहुर्तनो समय आवे ते पहेलांज अेक अेक मंत्रश्लोक बोली आ पोटलीओ मूकवी.

शिलान्यास अने रत्नादिन्यासना मंत्रो :

१ ॐ इन्द्रस्तु महतां दीप्तः, सर्वदेवाधिपो महान् । वज्रहस्तो गजारूढ–स्तस्मै नित्यं नमो नमः ॥२॥
२ ॐ अग्निस्तु महतां दीप्तः, सर्वतेजोधिपो महान् । मेषारूढः शक्तिहस्त–स्तस्मै नित्यं नमो नमः ॥३॥
३ ॐ यमस्तु महतां दीप्तः, सर्वप्रेताधिपो महान् । महिषस्थो दण्डहस्त–स्तस्मै नित्यं नमो नमः ॥४॥
४ ॐ निर्ऋतिस्तु महादीप्तः, सर्वक्षेत्राधिपो महान् । खड्गहस्तः शिवारूढ–स्तस्मै नित्यं नमो नमः ॥५॥

५ ॐ वरुणस्तु महादीप्तः, सर्ववार्यधिपो महान् । नक्रारूढः पाशहस्त-स्तस्मै नित्यं नमो नमः ॥६॥
६ ॐ वायुस्तु महतां दीप्तः, सर्वमण्डलपो महान् । ध्वजाहस्तो मृगारूढ-स्तस्मै नित्यं नमो नमः ॥७॥
७ ॐ कुबेरस्तु महादीप्तः, सर्वयक्षाधिपो महान् । निधिहस्तो गजारूढ-स्तस्मै नित्यं नमो नमः ॥८॥
८ ॐ ईशानस्तु महादीप्तः, सर्वयोगाधिपो महान् । शूलहस्तो वृषारूढ-स्तस्मै नित्यं नमो नमः ॥९॥
९ ॐ धरणस्तु महादीप्तः, सर्वसर्पाधिपो महान् । पद्मारूढो नागहस्त-स्तस्मै नित्यं नमो नमः ॥१०॥

उपरना अेकथी आठ सुधीनो अेक अेक मंत्रश्लोक बोलीने नीचे लखेल धातुओ औषधिओ, रत्नो अने धान्योने पूर्वादि ८ दिशाना खाडाओमां अनुक्रमे मूकवां, अने छेल्लो श्लोक बोलीने मध्यना खाडामां बधा पदार्थो मूकवा. न्यसनीय रत्न-धातु-औषधि-धान्यो नीचे प्रमाणे छे-

अनेन क्रमयोगेन, रत्नन्यासं तथोत्तमम् । पूर्वादिक्रमयोगेन, रत्नधात्वौषधानि च ॥११॥
वज्र-वैडूर्य-मुक्ताश्च, इन्द्रनीलं सुनीलकम् । पुष्परागं च गोमेदं, प्रवालं पूर्वतः क्रमात् ॥१२॥
हैमं रौप्यं ताम्रकांस्ये, रीतिका नाग-वङ्गकौ । पूर्वादिक्रमतश्चैव, आयसं चैवमन्ततः ॥१३॥
वचा वह्निः सहदेवी, विष्णुक्रान्ता च वारुणी । संजीवनी ज्योतिष्मती, ईश्वरी पूर्वतः क्रमात् ॥१४॥
यवो व्रीहिस्तथा कंगु-र्जूर्णाश्च तिलैर्युताः । शाली मुद्गाः समाख्याता, गोधूमाश्च क्रमेण तु ॥१५॥

भा० टी०—पूर्व दिशाथी मांडीने सृष्टिक्रमे रत्न-धातु-औषधि-बीजोनो आ क्रमथी न्यास करवो

जोइये, रत्नोमां–१ हीरो, २ वैडूर्य (अकीक), ३ मोती, ४इन्द्रनील, ५ महानील, ६ पुष्पराग (पुखराज), ७ गोमेद, अने ८ प्रवाल ए पूर्वादि दिशाना खाडाओमां क्रमे स्थापवां. धातुओ–१ सोनुं, २ रूपुं, ३ त्रांबु, ४ कांसु, ५ पीतल, ६ सीसुं, ७ कथीर, अने ८ लोहडुं पूर्वादिमां अनुक्रमे स्थापन करवी. औषधिओमां–१ वचा (घोडावज), २ चित्रक, ३ सहदेवी, ४ विष्णुक्रान्ता, ५ वारुणी, ६ संजीवनी, ७ ज्योतिष्मती (मालकांगणी) अने ८ ईश्वरी (शिवलिंगी); आ औषधिओ पूर्वादिक्रमे स्थापवी. धान्योमां–१ जव, २ व्रीहि, ३ कांग, ४ जूर्णा (जुवार) ५ तल, ६ शालि, ७ मग, अने ८ गेहुं ए धान्यो पूर्वादिमां अनुक्रमे स्थापवां. अने मध्य खातमां सर्वरत्नो, धातुओ, औषधिओ अने धान्यो स्थापवां. ते पछी त्यां शिला प्रतिष्ठित करवी. आ रत्नादिन्यास जेटली शिलाओ स्थापवी होय तेटला खातोमां करवो.

चतुःशिला प्रतिष्ठा :—

१. नन्दानी स्थापनामां—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव।" आ प्रमाणे कहीने आग्नेयकोणना खातमां उपशिला स्थापन करी, (२) "ॐ पद्म ! इहाऽऽगच्छ, इह तिष्ठ, ॐ पद्मनिधयेनमः" एम कही तेमां 'पद्म'निधिकलश स्थापवो, ते पछी (३) "ॐ नन्दे ! इहाऽऽगच्छ, इह तिष्ठ, ॐ नन्दायै नमः" ए मंत्र भणी उपर नन्दाशिलानो न्यास करवो अने उपर वासक्षेप करवो, सुगंध द्रव्यो छांटवां, अने नीचे प्रमाणे पार्थना करवी.

"वीर्येणादिवराहस्य, वेदार्यैस्त्वभिमंत्रिताम् । वसिष्ठनन्दिनीं नन्दां, प्राक् प्रतिष्ठापयाम्यहम् ॥१६॥"

"सुमुहूर्ते सुदिवसे, सा त्वं नन्दे ! निवेशिता । आयुः कारयितुर्दीर्घं, श्रियां चाग्र्यामिहाऽऽनय ॥१७॥"

२. भद्रानी स्थापनामां—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव ।" (२) "ॐ महापद्म ! इहाऽऽगच्छ, इह तिष्ठ, ॐ महापद्मनिधये नमः" (३) "ॐ भद्रे ! इहागच्छ, इहतिष्ठ, ॐ भद्रायै नमः ।" आ मंत्रो वडे नैर्ऋत कोणमां उपशिला निधिकलश अने भद्राशिलाने नन्दानी जेम स्थापी वासक्षेपादि करीने नीचेनो प्रार्थना श्लोक कहेवो.

"भद्राऽसि सर्वतोभद्रा, भद्रे ! भद्रं विधीयताम् । कश्यपस्य प्रियसुते !, श्रीरस्तु गृहमेधिनः ॥१८॥

३. जयानी स्थापनामां—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव ।" (२) "ॐ शंख ! इहागच्छ, इह तिष्ठ, ॐ शंखनिधये नमः" (३) "ॐ जये ! इहाऽऽगच्छ, इह तिष्ठ, ॐ जयायै नमः" आ मंत्रो वडे–जयाने वायव्य कोणमां सुप्रतिष्ठित करीने प्रार्थना करवी.

"जये ! विजयतां स्वामी, गृहस्याऽस्य माहात्म्यतः । आचन्द्रार्कं यशश्चास्य, भूम्यामिह विरोहतु ॥१९ ।"

४. पूर्णानी स्थापनामां—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव ।" (२) "ॐ सुभद्र ! इहागच्छ, इह तिष्ठ, ॐ सुभद्रनिधये नमः ।" (३) "ॐ पूर्णे ! इहाऽऽगच्छ, इहतिष्ठ, ॐ पूर्णायैनमः ।" आ मंत्रोथी पूर्णाने ईशान कोणमां प्रतिष्ठित करी प्रार्थना करे.

"त्वयि संपूर्णचन्द्राभे !, न्यस्तायां वास्तुनस्तले । भवत्वेष गृहस्वामी, पूर्णे ! पूर्णमनोरथः ॥२०॥"

पंचशिला प्रतिष्ठा :—

१. नन्दा—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव ।" (२) "ॐ पद्म ! इहाऽऽगच्छ, इह तिष्ठ, पद्मनिधये नमः ।" (३) "ॐ नन्दे ! इहाऽऽगच्छ इह तिष्ठ, ॐ नन्दायै नमः ।" आ मंत्रो वडे नन्दाने आग्नेय कोणमां स्थापन करीने नीचेना श्लोकोथी प्रार्थना करवी.

"नन्दे ! त्वं नन्दिनी पुंसां, त्वमत्र स्थापयाम्यहम् । वेश्मनि त्विह संतिष्ठ, यावचन्द्रार्कतारकाः ॥२१॥"

"आयुः कामं श्रियं देहि, देववासिनि ! नन्दिनि !। अस्मिन् रक्षा त्वया कार्या, सदा वेश्मनि यत्नतः ॥२२॥"

२. भद्रा—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव ।" (२) "ॐ महापद्म ! इहाऽऽगच्छ, इह तिष्ठ, ॐ महापद्मनिधये नमः ।" (३) "ॐ भद्रे ! इहाऽऽगच्छ, इह तिष्ठ, ॐ भद्रायै नमः ।" आ मंत्रो द्वारा नैर्ऋत कोणमां भद्राकी प्रतिष्ठा करी आ षट्पदी वडे प्रार्थना करवी.

"भद्रे ! त्वं सर्वदा भद्रं, लोकानां कुरु काश्यपि !। आयुदा कामदा देवि !, सुखदा च सदा भव ॥२३॥"

त्वामत्र स्थापयाम्यद्य, गृहेऽस्मिन् भद्रदायिनि !।

३. जया—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव ।" (२) "ॐ शंख ! इहाऽऽगच्छ, इह तिष्ठ, ॐ शंखनिधये नमः ।" (३) "ॐ जये ! इहाऽऽगच्छ, इह तिष्ठ, ॐ जयायै नमः ।" आ मंत्रो द्वारा वायव्य

कोणमां जयाशिलाने प्रतिष्ठित करी आ षट्पदी वडे प्रार्थना करवी.

" गर्गगोत्रसमुद्भूतां, त्रिनेत्रां च चतुर्भुजाम् । गृहेऽस्मिन् स्थापयाम्यत्र, जयां चारुविलोचनाम् ॥
नित्यं जयाय भूत्यै च, स्वामिनो भव भार्गवि ! ॥२४॥ "

४. रिक्ता—(१) " ॐ आधारशिले ! सुप्रतिष्ठिता भव । " (२) " ॐ मकर ! इहाऽऽगच्छ, इह तिष्ठ, ॐ मकरनिधये नमः । " (३) " ॐ रिक्ते ! इहाऽऽगच्छ, इह तिष्ठ, ॐ रिक्तायै नमः । " आ मंत्रो द्वारा ईशान कोणमां रिक्ताशिलाने स्थापीने आ श्लोकथी प्रार्थना करवी.

"रिक्ते ! त्वं रिक्तदोषघ्ने !, सिद्धिमुक्तिप्रदे ! शुभे । सर्वदा सर्वदोषघ्नि ! तिष्ठऽस्मिन् तत्रनंदिनि ॥२५॥"

५. पूर्णा—(१) " ॐ आधारशिले ! सुप्रतिष्ठिता भव । " (२) " ॐ सुभद्र ! इहाऽऽगच्छ, इह तिष्ठ, ॐ सुभद्रनिधये नमः । " (३) " ॐ पूर्णे ! इहाऽऽगच्छ, इह तिष्ठ, ॐ पूर्णायै नमः । " आ मंत्रो वडे वास्तुना मध्य भागमां आधारशिला, निधिकलश अने पूर्णाशिला प्रतिष्ठित करी पासे दीपक मूकीने आ श्लोको बोलीने प्रार्थना करवी.

" पूर्णे ! त्वं सर्वदा पूर्णान्, लोकान् संकुरु काश्यपि ! आयुर्दा कामदा देवि !, धनदा सुतदा भव ॥२६॥ "

" गृहाधारा वास्तुमयी, वास्तुदीपेन संयुता । त्वामृते नास्ति जगता-माधारश्च जगत्त्रये ॥२७॥ "

नवशिला प्रतिष्ठा :—

१. नन्दा—(१) " ॐ आधारशिले ! सुप्रतिष्ठिता भव । " (२) " ॐ पद्म ! इहाऽऽगच्छ, इह तिष्ठ, ॐ पद्मनिधये नमः । " (३) " ॐ अग्नये नमः, ॐ शक्तये नमः । " (४) " ॐ नन्दे ! इहाऽऽगच्छ, इह तिष्ठ ॐ नन्दायै नमः । " आ मंत्रो वडे आग्नेय कोणमां नन्दाने प्रतिष्ठित करी आ श्लोक वडे प्रार्थना करवी.

" नन्दे ! त्वं नन्दिनी पुंसां, त्वामत्र स्थापयाम्यहम् । प्रासादे त्विह संतिष्ठ, यावच्चन्द्रार्कतारकाः ॥२८॥ "

२. भद्रा—" ॐ आधारशिले ! सुप्रतिष्ठिता भव । " (२) " ॐ महापद्म ! इहाऽऽगच्छ, इह तिष्ठ, ॐ महापद्मनिधये नमः । " (३) " ॐ यमाय नमः, ॐ दण्डाय नमः । " (४) " ॐ भद्रे ! इहागच्छ, इह तिष्ठ, ॐ भद्रायै नमः । " आ मंत्रो द्वारा दक्षिणमां भद्रशिलाने स्थापन करी आ श्लोक बोली प्रार्थना करवी.

" भद्रे ! त्वं सर्वदा भद्रं, लोकानां कुरु काश्यपि ! । त्वामत्र स्थापयाम्यद्य, प्रसादे भद्रदायिनि ! ॥२९॥ "

३. जया—(१) " ॐ आधारशिले ! सुप्रतिष्ठिता भवः । " (२) " ॐ शंखे ! इहाऽऽगच्छ, इह तिष्ठ, ॐ शंखनिधये नमः । " (३) " ॐ निर्ऋतये नमः, ॐ खड्गाय नमः । " (४) " ॐ जये ! इहाऽऽगच्छ, इह तिष्ठ, ॐ जयायै नमः । " आ मंत्रोथी नैर्ऋत कोणमां जयानी प्रतिष्ठा करी आ श्लोक वडे प्रार्थना करवी.

" गर्गगोत्रसमुद्भूतां, त्रिनेत्रां च चतुर्भुजाम् । प्रासादे स्थापयाम्यत्र जयां चारुविलोचनाम् ॥३०॥ "

४. रिक्ता—(१) ॐ आधारशिले ! सुप्रतिष्ठिता भव । " (२) "ॐ मकर ! इहाऽऽगच्छ, इह तिष्ठ ॐ मकर

निधये नमः।" (३) "ॐ वरुणाय नमः, ॐ पाशाय नमः।" (४) "ॐ रिक्ते ! इहागच्छ, इह तिष्ठ, ॐ रिक्तायै नमः।" आ मंत्रो द्वारा रिक्तानी पश्चिम दिशामां प्रतिष्ठा करी—
"रिक्ते ! त्वं रिक्तदोषघ्ने !, ऋद्धिवृद्धिप्रदे ! शुभे ! । सर्वदा सर्वदोषघ्ने ! तिष्ठाऽस्मिन् तत्रनंदिनी ॥३१॥"
आ श्लोकथी प्रार्थना करवी.

५, अजिता—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव।" (२) "ॐ कुन्द ! इहाऽऽगच्छ, इह तिष्ठ, ॐ कुन्दनिधये नमः।" (३) "ॐ वायवे नमः नमः, ॐ अंकुशाय नमः।" (४) "ॐ अजिते ! इहाऽऽगच्छ, इह तिष्ठ, ॐ अजितायै नमः।" आ मंत्रो द्वारा वायव्य कोणमां अजिताने प्रतिष्ठित करी—
"अजिते ! सर्वदा त्वं मां, कामानामजितं कुरु। प्रासादे तिष्ठ संहृष्ठा, यावचन्द्रार्कतारकाः ॥३२॥"
आ श्लोक वडे प्रार्थना करवी.

६. अपराजिता—(१) "ॐ आधारशिले ! सुप्रतिष्ठिता भव।" (२) "ॐ नील ! इहागच्छ, इह तिष्ठ, ॐ नीलनिधये नमः।" (३) "ॐ कुबेराय नमः, ॐ गदायै नमः।" (४) "ॐ अपराजिते ! इहाऽऽगच्छ इह तिष्ठ, ॐ अपराजितायै नमः।" आ मंत्रो बोली उत्तरदिशाभागमां अपराजिताने स्थापी—
"स्थिराऽपराजिते भूत्वा, कुरु मामपराजितम्। आयुर्दा धनदा चात्र, पुत्रपौत्रप्रदा भव ॥३३॥"
आ श्लोके करीने प्रार्थना करवी.

७. शुक्ला—(१) "ॐ आधारशिले! सुप्रतिष्ठिता भव!" (२) "ॐ कच्छप! इहाऽऽगच्छ, इह तिष्ठ, ॐ कच्छपनिधये नमः।" (३) "ॐ ईशानाय नमः, ॐ त्रिशूलाय नमः।" (४) "ॐ शुक्ले! इहाऽऽगच्छ, इह तिष्ठ, ॐ शुक्लायै नमः।" आ मंत्रोथी ईशान कोणमां शुक्लाने प्रतिष्ठित करी—

"शुक्ले! त्वं देहि मे स्थैर्य, स्थिरा भूत्वाऽत्र सर्वदा। आयुः कामं श्रियं चापि, प्रासादेऽत्र ममाऽनघे! ॥३४॥"

आ श्लोक वडे प्रार्थना करवी.

८. सौभागिनी—(१) "ॐ आधारशिले! सुप्रतिष्ठिता भव।" (२) "ॐ मुकुन्द! इहाऽऽगच्छ, इह तिष्ठ, ॐ मुकुन्दनिधये नमः।" (३) "ॐ इन्द्राय नमः, ॐ वज्राय नमः।" (४) "ॐ सौभागिनि! इहाऽऽगच्छ, इह तिष्ठ, ॐ सौभागिन्यै नमः।" आ मंत्रोथी सौभागिनीने पूर्वमां प्रतिष्ठित करी—

"प्रासादेऽत्रस्थिरा भूत्वा, सौभागिनि! शुभं कुरु। धनधान्यसमृद्धिं च, सर्वदा कुरु नन्दिनि! ॥३५॥"

आ श्लोकथी प्रार्थना करवी.

९. धरणी—(१) "ॐ आधारशिले! सुप्रतिष्ठिता भव।" (२) "ॐ खर्व! इहाऽऽगच्छ, इह तिष्ठ, ॐ खर्वनिधये नमः।" (३) "ॐ नागाय नमः, ॐ उत्तराय नमः।" (५) "ॐ धरणि! इहाऽऽगच्छ, इह तिष्ठ, ॐ धरण्यै नमः।" आ मंत्रो वडे वास्तुना मध्य भागमां धरणिशिलाने स्थापीने—

"धरणि! लोकधरणीं, त्वामत्र स्थापयाम्यहम्। निर्विघ्नं धारय त्वं मे, प्रासादं सर्वदा शुभे! ॥३६॥"

आ श्लोक भणी प्रार्थना करवी.

ए पछी अभिषेक करीये तैयार राखेलो सुवर्ण, रूप्य, वा ताम्रमय कूर्म हाथमां लेइने "ॐ कूर्म ! इहाऽऽ-
गच्छ, इह तिष्ठ, ॐ कूर्माय: नमः।" ए मंत्र वडे मध्यशिला ऊपर कूर्मनी प्रतिष्ठा करी वासक्षेप पूर्वक
केसर चंदनादिके पूजा करवी, धूप उखेववो, अंते—

"सर्वलक्षणसंपन्न !, कूर्म ! भूधरणांक्षम !। चैत्यं कर्तुं महीपृष्ठे, ममाज्ञां दातुमर्हसि ॥३७॥"

आ श्लोक वडे प्रार्थना करी कूर्म ऊपर पुष्पांजलि नांखवी. पछी वाजिंत्रो वगडाववां, दिग्पालोने बलिदान
आपवुं, गृहस्वामीए यथाशक्ति याचकोने दान देवुं. साधर्मिकभक्ति प्रभावनादिक करवुं, शिल्पीनो
सत्कार करवो.

महोत्सव शरु करता नवा भरावाता प्रतिमाजी माटे करातो विधि.

गुरुः स स्नात्रकारः सचतुर्विधसंघोधिकृतजिनस्तुतिगर्भां चैत्यवन्दनां करोति। ततः शान्तिनाथाराधनार्थं
कायोत्सर्गः चतुर्विंशतिस्तवचिन्तनं, स्तुतिकथनं तु यथा—"श्रीमते शान्तिनाथाय नमः शान्तिविधायिने।
त्रैलोक्यस्यामराधीशमुकुटाभ्यर्चितांघ्रये ॥१॥" ततः श्रुतदेवतादिकायोत्सर्गेषु सर्वेषु नमस्कारचिन्तनं, स्तु-
तिर्यथा—"यस्याः प्रासादपरिवर्धितशुद्धबोधाः पारं व्रजन्ति सुधियः श्रुततोयराशेः। सानुग्रहा मयि समी-
हितसिद्धयेऽस्तु सर्वज्ञशासनरता श्रुतदेवतासौ ॥१॥" ततो भुवनदेवताकायोत्सर्गः। स्तुतिः—"ज्ञानादि-

गुणयुतानां नित्यं स्वाध्यायसंयमरतानाम् । विदधातु भुवनदेवी शिवं सदा सर्वभूतानाम् ॥१॥" क्षेत्रदेवताकायोत्सर्गः । स्तुतिः—"यस्याः क्षेत्रं समाश्रित्य साधुभिः साध्यते क्रिया । सा क्षेत्रदेवता नित्यं भूयान्नः सुखदायिनी ॥१॥" ततः शांतिदेवताकायोत्सर्गः । स्तुतिः—"उन्मृष्टरिष्टदुष्टग्रहगतिदुःस्वप्नदुर्निमित्तादि । संपादितहितसंपन्नामग्रहणं जयति शान्तेः ॥१॥" शासनदेवताकायोत्सर्गः । स्तुतिः—"या पातिशासनं जैनं सद्यः प्रत्यूहनाशिनी । साभिप्रेतसमृद्ध्यर्थं भूयाच्छासनदेवता ॥१॥" अम्बिकाराधनार्थं कायोत्सर्गः । स्तुतिः—"अम्बा बालांकितांकासौ सौख्यस्यान्तं दधातु नः । माणिक्यरत्नालंकारचित्रसिंहासनस्थिता ॥१॥" अच्छुसादेवीकायोत्सर्गः । स्तुतिः—"रसितमुच्चतुरंगमनायकं विशतु कांचनकांतिरिहाच्युता । धृतधनुःफलकासिशरैः करैरसितमुच्चतुरंगमनायकम् ॥१॥" समस्तवैयावृत्यकरकायोत्सर्गः । स्तुतिः—"सर्वे यक्षाम्बिकाद्या ये वैयावृत्यकरा जिने । रौद्रोपद्रव[1]संघातं ते द्रुतं द्रावयन्तु नः ॥१॥" ततः पूर्णनमस्कारं भणित्वा शक्रस्तवभणनं अर्हणादिस्तोत्रभणनं जयवीयरागाथाकथनं, ततो गुरुः स्वस्य सकलीकरणं करोति । तद्विधिर्यथा—ॐ नमो अरिहंताणं हृदयं रक्ष रक्ष, ॐ नमो सिद्धाणं ललाटं रक्ष रक्ष, ॐ नमो आयरियाणं शिखां रक्ष रक्ष, ॐ नमो उवज्झायाणं कवचं सर्वशरीरं रक्ष रक्ष, ॐ नमो सव्वसाहूणं अस्त्रम्, इति सर्वत्र त्रिस्त्रिः अङ्गन्यासः । ततः सप्त वारान् शुचिविद्यारोपणं । शुचिविद्या यथा ॐ नमो अरिहंताणं, ॐ नमो

---

[1] क्षुद्रोपद्रव इत्यपि पाठः ।

सिद्धाणं, ॐ नमो आयरियाणं, ॐ नमो उवज्झायाणं, ॐ नमो लोए सव्वसाहूणं, ॐ नमो आगासगामीणं, ॐ नमो चारणलद्धीणं, ॐ हः क्षः नमः, ॐ अशुचिः शुचिर्भवामि स्वाहा, अनेन सर्वांगशुचीकरणं। केचित्स्नात्रकारांगरक्षामपि अनेनैव मन्त्रेण कथयन्ति। ततः संक्षेपात् दिक्पालपूजनं, ततो गुरुर्बलिमभिमन्त्रयति। मन्त्रो यथा—ॐ ह्रीँ क्ष्वीं सर्वोपद्रवं विम्बस्य रक्ष २ स्वाहा अनेनैकविंशतिवारान् बलिमभिमन्त्रयेत्। ततोभिमन्त्रितबलिं स्नात्रकारा जलदानपूर्वकं धूपदानपूर्वकं सर्वदिक्षु बलिं निक्षिपन्ति। ततः स्नात्रकारा अभिनवविम्बस्योपरि पुष्पांजलिं निक्षिपन्ति। वृत्तं यथा—"अभिनवसुगंधिवासितपुष्पौघभृता सुधूपगंधाढ्या। विम्बोपरि निपतन्ती सुखानि पुष्पांजलिः कुरुताम् ॥१॥" ततो गुरुर्नवबिम्बस्याग्रतः मध्यांगुलीद्वयोर्ध्वीकरणेन रौद्रदृष्ट्या तर्जनीमुद्रां दर्शयति। ततो वामकरेण जलं गृहीत्वा रौद्रदृष्ट्या बिम्बमाच्छोटयति। केषांचिन्मते स्नात्रकारा एव वामहस्तोदकेन प्रतिमामाच्छोटयन्ति। ततो गुरुर्बिम्बस्य तिलकं पूजनं च स्नात्रकारकरात् कारयति, ततो गुरुर्बिम्बस्य मुद्गरमुद्रां दर्शयति, ततोऽक्षततन्दुलभृतं स्थालं ददाति, ततो वज्रमुद्रया गरुडमुद्रया बिम्बस्य नेत्ररक्षां करोति, ततो बलिमन्त्रेण करामर्शेन बिम्बस्य सर्वशरीरे कवचं करोति। बलिमन्त्रो यथा—ॐ ह्रीँ क्ष्वीं सर्वोपद्रवं बिम्बस्य रक्ष रक्ष स्वाहा, अनेनैव मन्त्रेण दशस्वपि दिक्षु त्रिस्त्रिः पठनेन पुष्पाक्षतक्षेपेण दिग्बन्धः। ततः आर्द्राः स्नात्रकारा वा बिम्बोपरि सणलाजकुलत्थयवकंगुमाषसर्षपरूपं सप्तधान्यकं क्षिपन्ति। सप्तधान्यक्षेपवृत्तम्—"सर्वौष-

धीवहुलमंगलयुक्तिरूपं संप्रीणनाकरमपारशरीरिणां च। आदौ प्रभोः प्रतिनिधेरधिवासनायां सम्मानमस्तु निहितं दुरितापहारि ॥१॥" ततो गुरुर्जिनमुद्रया कलशमभिमन्त्रयति। मन्त्रो यथा—ॐ नमो यः सर्वशरीरावस्थिते महाभूते आगच्छ २ जलं गृहाण २ स्वाहा। ततः सर्वौषधिचंदनाद्यभिमन्त्रयति। मन्त्रो यथा—ॐ नमो यः सर्वशरीरावस्थिते महाभूते आगच्छ २ सर्वौषधिचंदनसमालंभनं गृहाण २ स्वाहा। समालंभनं चार्चिक्यमुच्यते। ततः पुष्पाणि अभिमन्त्रयति। मन्त्रो यथा—ॐ नमो यः सर्वशरीरावस्थिते महाभूते आगच्छ २ सर्वतो मेदिनी पुष्पं गृहाण स्वाहा ॐ नमो यः बलिं दह २ महाभूते तेजोधिपते धुधु धूपं गृह्ण २ स्वाहा। तत एभिरेव मन्त्रैर्बिम्बस्य जलसर्वौषधिचंदनपुष्पधूपोद्ग्राहणपूजा क्रमात् कर्तव्या अनाक् २ ततो बिम्बांगुलौ पञ्चरत्नं वध्यते। वृत्तं—"स्वर्णमौक्तिकसविद्रुमरूप्यै राजपट्टशकलेन समेतम्। पञ्चरत्नमिह मंगलकार्ये देव दोषनिचयं विनिहन्तु ॥१॥" ततः स्नात्रकाराः पूर्वोक्तरूपाः प्रत्येकं चतुः चतुः कलशैः कलशमुद्रया बहुगीताद्यविस्तरेण स्नात्रं कुर्वन्ति, चत्वारोपि कलशचतुष्कं जिनबिम्बोपरि प्रक्षिपन्ति। कलशक्षेपानन्तरं चंदनतिलककरणं पुष्पारोपणं धूपोत्क्षेपणं बिम्बस्य कुर्वन्ति। एतेषु कलशक्षेपेषु नमस्कारपाठ एव। ततः प्रथमं हिरण्योदकेन स्नपनं। वृत्तं—"सुपवित्रतीर्थनीरेण संयुतं गन्धपुष्पसंमिश्रम्। पततु जलं बिम्बोपरि सहिरण्यं मन्त्रपरिपूतम् ॥१॥" द्वितीयं पञ्चरत्नस्नात्रं, अत्र पञ्चरत्नं प्रवालमौक्तिकसुवर्णरजताम्ररूपं। वृत्तं यथा—"नानारत्नौघयुतं सुगंधि पुष्पाधिवासितं नीरम्। पतताद्विचित्रवर्णं मन्त्राढ्यं स्थापनाबिम्बे ॥१॥"

तृतीयं प्लक्षाश्वत्थशिरीषोदुम्बरवटमध्यक्वल्लीकषायजलस्नानं। वृत्तं—"प्लक्षाश्वत्थोदुम्बरशिरीषवल्कादिकल्कसंसृष्टम्। बिम्बे कषायनीरं पततादधिवासितं जैने ॥१॥" चतुर्थं पर्वतपद्मतडागनदीसंगमनदीतटद्वयमृत्तिकागोशृंगवल्मीकमृत्तिकादिस्नानं। वृत्तं—"पर्वतसरोनदीसंगमादिमृद्भिश्च मन्त्रपूतानि। उद्वर्त्य जैनबिम्बं स्नपयाम्यधिवासनासमये ॥१॥" पञ्चमं पञ्चगव्यदर्भोदकस्नात्रं। वृत्तं—"दधिदुग्धघृतछगणप्रस्रवणैः पञ्चभिर्गवांगभवैः। दर्भोदकसंमिश्रैः स्नपयामि जिनेश्वरप्रतिमाम् ॥१॥" षष्ठं सहदेवीबलाशतमूलीशतावरीकुमारीगुहसिंहीव्याघ्रीसदौषधिस्नात्रं। वृत्तं यथा—"सहदेव्यादिसदौषधिवर्गेणोद्वर्तितस्य बिम्बस्य। संमिश्रं बिम्बोपरि पतज्जलं हरतु दुरितानि ॥१॥" सप्तमं मयूरशिखाविरहकअंकोल्ललक्ष्मणाप्रभृति पवित्रमूलिकास्नात्रं। वृत्तं—"स्वपवित्रमूलिकावर्गमर्दिते तदुदकस्य शुभधारा। बिम्बेऽधिवाससमये यच्छतु सौख्यानि निपतन्ती ॥ १ ॥" ततः कुष्ठादिप्रथमाष्टकवर्गस्य अष्टमं स्नात्रं। वृत्तं यथा—"नानाकुष्ठाद्यौषधिसंमिश्रे तद्युतं पतन्नीरम्। बिम्बे कृतसन्मन्त्रं कर्मौघं हन्तु भव्यानाम् ॥ १ ॥ ततो नवमं मेदादिद्वितीयाष्टकवर्गस्नात्रं। वृत्तम्—"मेदाद्यौषधिभेदोपरोष्टवर्गः स्वमन्त्रपरिपूतः। जिनबिम्बोपरि निपतत् सिद्धिं विदधातु भव्यजने ॥ १ ॥" इति नव स्नात्राणि। ततः सूरिरुत्थाय गरुडमुद्रया मुक्ताशुक्तिकमुद्रया परमेष्ठिमुद्रया वा प्रतिष्ठाप्यदेवताह्वानं तदग्रतो भूत्वा ऊर्ध्वः सन् करोति। मन्त्रो यथा—ॐ नमोऽर्हत्परमेश्वराय चतुर्मुखपरमेष्ठिने त्रैलोक्यगताय अष्टदिग्भागकुमारीपरिपूजिताय देवाधिदेवाय दिव्यशरीराय त्रैलो-

क्ष्यमहिताय आगच्छ २ स्वाहा। ततो दिक्पालाह्वानं संक्षेपेण करोति यथा—"इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं तथा। वायुं कुबेरमीशानं नागं ब्रह्माणमेव च ॥ १ ॥" मन्त्रो यथा— ॐ इन्द्राय सायुधाय सवाहनाय सपरिजनाय इह जिनेन्द्रस्थापने आगच्छ २ स्वाहा। एवमग्नये एवं दशानामपि दिक्पालानामाह्वानमात्रमेव। ततो बिम्बोपरि पुष्पांजलिक्षेपः वृत्तम्—"सर्वस्थिताय विबुधासुरपूजिताय सर्वात्मकाय विदुदीरितविष्टपाय। स्थाप्याय लोकनयलप्रसदप्रदाय पुष्पांजलिर्भवतु सर्वसमृद्धिहेतुः ॥ १ ॥" ततो दशमं हरिद्रादिसर्वौषधिस्नात्रं। वृत्तं यथा—"सकलौषधिसंयुक्त्या सुगन्धया घर्षितं सुगतिहेतोः। स्नपयामि जैनबिम्बं मन्त्रितलन्नीरनिवहेन ॥ १ ॥" ततो द्वितीयं सहदेव्यादिसर्वौषधि एकादशं स्नात्रं। वृत्तं यथा—"सर्वामयदोषहरं सर्वप्रियकारकं च सर्वविदः। पूजाभिषेककाले निपततु सर्वौषधीवृन्दम् ॥ १ ॥" द्वादशं विष्णुक्रान्तादिशतमूलस्नात्रं। वृत्तं यथा—"अनन्तसुखसंघातकन्दकादम्बिनीसमम्। शतमूलमिदं बिम्बस्नात्रे यच्छतु वांछितम् ॥ १ ॥" त्रयोदशं शतावर्यादिसहस्रमूलीस्नात्रं। वृत्तं—"सहस्रमूलसर्वर्द्धिसिद्धिमूलमिहार्हतः। स्नात्रे करोतु सर्वाणि वांछितानि महात्मनाम् ॥ १ ॥" ततो गुरुणा दृष्टिदोषघाताय सिद्धजिनमन्त्रो दक्षिणहस्तास्पर्शेन बिम्बे न्यसनीयः। मन्त्रो यथा–इहागच्छन्तु जिनाः सिद्धा भगवन्तः स्वसमयेनेहानुग्रहाय भव्यानां स्वाहा। अथवा हुँ क्षुँ ह्रीँ क्ष्वीँ ॐ भः स्वाहा। अथ लोहेनास्पृष्टसिद्धार्थरक्षापोट्टलिकाः सूरिणाभिमन्त्रिताः स्नात्रकारैः बिम्बदक्षिणकरे बन्धनीयाः। तदभिमन्त्रो यथा—ॐ क्षाँ क्षीँ

क्ष्वीँ स्वीँ स्वाहा । चन्दनतिलकं च विधेयं बिम्बस्य । ततो गुरुरूर्ध्वीभूय कृताञ्जलिः जिनपुरतो विज्ञप्तिकां करोति । साचेयं—स्वागताः जिनाः सिद्धाः प्रसाददाः सन्तु, प्रसादं धिया कुर्वन्तु, अनुग्रहपरा भवन्तु, स्वागतमनुस्वागतम् । ततो गुरुरञ्जलिमुद्रया मन्त्रपूर्वकं सुवर्णभाजनस्थमर्घं पूर्वोक्तं बिम्बाग्रतो निवेदयेत् । मन्त्रो यथा ॐभः अर्घं प्रतिच्छन्तु पूजां गृह्णन्तु जिनेन्द्राः स्वाहा । ततः पुनर्दिक्पालाह्वानं तेषां प्रत्येकमर्घदानं यथा—ॐ इन्द्राय सायुधाय सवाहनाय सपरिकराय इह प्रतिष्ठामहोत्सवे आगच्छ २ इदमर्घ्यं गृहाण २ स्वाहा, एवं ॐ अग्नये सा० ॐ नैर्ऋताय सा०, ॐ वरुणाय सा०, ॐ वायवे सा०. ॐ कुबेराय सा०, ॐ ईशानाय सा० शेषं पूर्ववत् । ॐ नागेभ्यः सा०, ॐ ब्रह्मणे सा०, एवं सायुधाय सवाहनाय कथनपूर्वं अर्घ्यदानं । ततश्चतुर्दशं पुष्पस्नात्रं वृत्तं—"अधिवासितं सुमन्त्रैः सुमनः किञ्जल्कराजितं तोयम् । तीर्थजलादिसुयुक्तं कलशोन्मुक्तं पततु बिम्बे ॥ १ ॥" पञ्चदशं सिल्हककुष्ठमांसीमुराचंदनागुरुकर्पूरादियुक्तगन्धस्नानिकास्नात्रं । वृत्तं यथा—"गन्धांगस्नानिकया सन्मृष्टं तदुदकस्य धाराभिः । स्नपयामि जैनबिम्बं कर्मौघोच्छित्तये शिवदम् ॥ १ ॥" ततः षोडशं वासस्नात्रं शुक्ला गन्धा वासा उच्यन्ते, ते च मनाक् कृष्णा गन्धा इति । वृत्तं—"हृद्यैराह्लादकरैः स्पृहणीयैर्मन्त्रसंस्कृतैर्जैनीम् । स्नपयामि सुगतिहेतोः प्रतिमामधिवासितैर्वासैः ॥१॥" सप्तदशं चन्दनस्नात्रं । वृत्तं—"शीतलसरससुगन्धिर्मनोमतश्चन्दनद्रुमसमुत्थः । चन्दनकल्कः सजलो मन्त्रयुतः पततु जिनबिम्बे ॥ १ ॥" अष्टादशं कुंकुमस्नात्रं ।वृत्तं—"काश्मीरजलसुविलिप्तं बिम्बं तन्नीरधार-

याभिनवम् । सन्मन्त्रयुक्त्या शुचि जैनं स्नपयामि सिद्ध्यर्थम् ॥ १ ॥" एतैर्वस्तुभिर्जिनबिम्बमालिप्य एतद्वस्तुसंमिश्रेण जलेन स्नात्रं सर्वेषु स्नात्रेष्वन्तराले चन्दनचर्चनं पुष्पारोपणं धूपदानं ततो बिम्बस्यादर्शं दर्शयेत् । आदर्शदर्शनमन्त्रो यथा–"आत्मावलोकनकृते कृतिनां यो वहति सच्चिदानन्दम् । भवति स आदर्शोयं गृह्णातु जिनेश्वरप्रतिच्छन्दम् ॥ १ ॥" तत एकोनविंशतितमं तीर्थोदकस्नात्रं । वृत्तं यदा–"जलधिनदीह्रदकुण्डेषु यानि सलिलानि तीर्थशुद्धानि । तैर्मन्त्रसंस्कृतैरिह बिम्बं स्नपयामि सिद्ध्यर्थम् ॥ १ ॥" विंशतितमं कर्पूरस्नात्रं । वृत्तं–"शशिकरतुषारधवला निर्मलगन्धा सुतीर्थजलमिश्रा । कर्पूरोदकधारा सुमन्त्रपूता पततु बिम्बे ॥ १ ॥" ततः पुष्पाञ्जलिक्षेपः । वृत्तं–नानासुगन्धपुष्पौघरञ्जिता चिंचरीककृतनादा । धूपामोदविमिश्रा पततात्पुष्पांजलिर्बिम्बे ॥ १ ॥" तत एकविंशतितममष्टोत्तरशतमृन्मयकलशैः शुद्धजलैः स्नात्रम् । वृत्तं यथा–"चक्रे देवेन्द्रराजैः सुरगिरिशिखरे योभिषेकः पयोभिर्नृत्यन्तीभिः सुरीभिर्ललितपदगमं तूर्यनादैः सुदीपैः । कर्तुं तस्यानुकारं शिवसुखजनकं मन्त्रपूतैः सुकुम्भैर्बिम्बं जैनं प्रतिष्ठाविधिवचनपरः पूजयाम्यत्र काले ॥ १ ॥" ततो गुरुरभिमन्त्रितचन्दनेन वामकरधृतां प्रतिमां दक्षिणकरे सर्वाङ्गमालिम्पति । चन्दनाभिमन्त्रणं सूरिमन्त्रेण अधिवासनामन्त्रेण वा कार्यम् । अधिवासनामन्त्रो यथा–ॐ नमः शान्तये हूँ क्षूँ हूँ सः अथवा ॐ नमो पयाणुसारीणं कविलपर्यंतः सूरिमन्त्रः । ततः कुसुमारोपणं धूपोत्क्षेपणं वासक्षेपं च करोति, ततो

१ वदति इति पाठान्तरम् । २ सर्वदानन्दम् इति पाठान्तरम् ।

गुरुः प्रियंगुकर्पूरगोरोचनाभिर्हस्तलेपं विधाय मदनफलसहितं कङ्कणबन्धं करोति बिम्बस्य। तन्मन्त्रो यथा— ॐ नमो खीरासवलद्धीणं, ॐ नमो महुयासवलद्धीणं, ॐ नमो संभिन्नसोईणं, ॐ नमो पयाणुसारीणं, ॐ नमो कुट्ठबुद्धीणं जंमियं विज्जं पउंजामि सा मे विज्जा पसिज्झओ ॐ अवतर २ सोमे २ कुरु २ कुरु २ वग्गु २ निवग्गु २ सुमणे सोमणसे महुमहुरे कविल ॐ कः क्षः स्वाहा कंकणबन्धनम् कौसुम्भसूत्रमदनफलारिष्टमयं कण्ठबाहुप्रकोष्ठचरणेषु क्रियते। ततोऽधिवासनामन्त्रेण गुरुर्मुक्ताशुक्तिमुद्रया मस्तकस्कन्धद्वयजानुद्वयरूपाणि बिम्बस्य पञ्चाङ्गानि ससवेलं स्पृशति। अधिवासनामन्त्रो यथा ॐ नमः शान्तये हूँ क्षूँ हूँ सः। धूपश्च देयः। ततः परमेष्ठिमुद्रां कृत्वा गुरुः पुनरपि जिनाह्वानं करोति। मन्त्रो यथा—ॐ नमोऽर्हत्परमेश्वराय चतुर्मुखपरमेष्ठिने त्रैलोक्यगताय अष्टदिग्भागकुमारीपरिपूजिताय देवाधिदेवाय दिव्यशरीराय त्रैलोक्यमहिताय आगच्छ २ स्वाहा। ततो नन्द्यावर्तपूजा। चलबिम्बे नन्द्यावर्तविधिं विधाय नन्द्यावर्तोपरि प्रतिमां स्थापयेत्। स्थिरबिम्बे तु निश्चलस्थिते बिम्बाग्रतः वेदिमध्ये वा नन्द्यावर्तपूजनं। तद्विधिश्चायं गुरुर्निषद्यायामुपविश्य नन्द्यावर्तं पूजयति, कर्पूरसंमिश्रीखण्डससलेपलिप्ते श्रीपर्णीपट्टे कर्पूरकस्तूरिकागोरोचनासंमिश्रकुंकुमरसेन प्रथमं नवकोणः प्रदक्षिणतया नन्द्यावर्तो लिख्यते। यथामध्याद्बहिर्वलयक्रमः तन्मध्ये नन्द्यावर्तं दक्षिणपार्श्वे सौधर्मेन्द्रशक्रस्थापना वामे च ईशानेन्द्रस्थापना अधः श्रुतदेवास्थापना तत्र सौधर्मेन्द्रः काञ्चनवर्णश्चतुर्भुजः गजवाहनः पञ्चवर्णवस्त्रावरणः पाणिद्वयेनाञ्जलिबद्धः एकपाणौ अभयं एकपाणौ वज्रं। ईशानेन्द्रस्तु श्वेतवर्णो

वृषभवाहनः नीललोहितवस्त्रः चतुर्भुजः जयभृत् शूलचापभृत् २ करद्वयेनांजलिकृच्च । श्रुतदेवता श्वेतवर्णा श्वेतवस्त्रधारिणी हंसवाहना श्वेतसिंहासनासीना भामण्डलालंकृता चतुर्भुजा श्वेताब्जवीणालंकृतवामकरा पुस्तकमुक्ताक्षमालालंकृतदक्षिणकरा ततस्तत्परिधौ वृत्तवेष्टनं बहिर्गृहाष्टकविरचनं तत्राष्टदलेषु क्रमेण न्यासः ॐ नमोऽर्हद्भ्यः स्वाहा, ॐ नमः सिद्धेभ्यः स्वाहा, ॐ नम आचार्येभ्यः स्वाहा, ॐ नमः उपाध्यायेभ्यः स्वाहा, ॐ नमः सर्वसाधुभ्यः स्वाहा, ॐ नमो ज्ञानाय स्वाहा, ॐ नमो दर्शनाय स्वाहा, ॐ नमश्चारित्राय स्वाहा। ततः परिधौ वृत्तवलयं तद्बहिश्चतुर्दिक्षु चतुर्विंशतिदलस्थापनं, तेषु क्रमेण स्थापनं यथा–ॐ नमो मरुदेव्यै। स्वाहा १ ॐ नमो विजयायै स्वाहा २ ॐ नमः सेनायै स्वाहा ३ ॐ नमः सिद्धार्थायै स्वाहा ४ ॐ नमो मङ्ग-लायै स्वाहा ५ ॐ नमः सुसीमायै स्वाहा ६ ॐ नमः पृथ्व्यै स्वाहा ७ ॐ नमो लक्ष्मणायै स्वाहा ८ ॐ नमो रामायै स्वाहा ८ ॐ नमो नन्दायै स्वाहा १० ॐ नमो विष्णवे स्वाहा ११ ॐ नमो जयायै स्वाहा १२ ॐ नमः श्यामायै स्वाहा १३ ॐ नमः सुयशसे स्वाहा १४ ॐ नमः सुव्रतायै स्वाहा १५ ॐ नमोऽचिरायै स्वाहा १६ ॐ नमः श्रियै स्वाहा १७ ॐ नमो देव्यै स्वाहा १८ ॐ नमः प्रभावत्यै स्वाहा १९ ॐ नमः पद्मावत्यै स्वाहा २० ॐ नमो वप्रायै स्वाहा २१ ॐ नमः शिवायै स्वाहा २२ ॐ नमो वामायै स्वाहा २३ ॐ नमस्त्रिशलायै स्वाहा २४। ततः पुनः परिधिमण्डलं तत्र षोडशदलरचना तेषु दलेषु ॐ नमो रोहिण्यै स्वाहा १ ॐ नमः प्रज्ञप्त्यै स्वाहा २ ॐ नमो वज्रशृंखलायै स्वाहा ३ ॐ नमो वज्रांकुश्यै स्वाहा ४ ॐ नमोऽप्रतिचक्रायै स्वाहा ५ ॐ नमः

पुरुषदत्तायै स्वाहा ६ ॐ नमः काल्यै स्वाहा ७ ॐ नमो महाकाल्यै स्वाहा ८ ॐ नमो गौर्यै स्वाहा ९ ॐ नमो गन्धार्यै स्वाहा १० ॐ नमो महाज्वालायै स्वाहा ११ ॐ नमो मानव्यै स्वाहा १२ ॐ नमोऽच्छुप्तायै स्वाहा १३ ॐ नमो वैरोट्यायै स्वाहा १४ ॐ नमो मानस्यै स्वाहा १५ ॐ नमो महामानस्यै स्वाहा १६। ततो बहिःपरिधिं विधाय चतुर्विंशति दलानि कुर्यात् तेषु क्रमेण ॐ नमः सारस्वतेभ्यः स्वाहा १ ॐ नम आदित्येभ्यः स्वाहा २ ॐ नमो वह्निभ्यः स्वाहा ३ ॐ नमो वरुणेभ्यः स्वाहा ४ ॐ नमो गर्दतोयेभ्यः स्वाहा ५ ॐ नमस्तुषितेभ्यः स्वाहा ६ ॐ नमोऽव्याबाधितेभ्यः स्वाहा ७ ॐ नमोरिष्टेभ्यः स्वाहा ८ ॐ नमोऽग्न्याभेभ्यः स्वाहा ९ ॐ नमः सूर्याभेभ्यः स्वाहा १० ॐ नमश्चन्द्राभेभ्यः स्वाहा ११ नमः सत्याभेभ्यः स्वाहा १२ ॐ नमः श्रेयस्करेभ्यः स्वाहा १३ ॐ नमः क्षेमंकरेभ्यः स्वाहा १४ ॐ नमो वृषभेभ्यः स्वाहा १५ ॐ नमः कामचारेभ्यः स्वाहा १६ ॐ नमो निर्वाणेभ्यः स्वाहा १७ ॐ नमो दिशान्तरक्षितेभ्यः स्वाहा १८ ॐ नम आत्मरक्षितेभ्यः स्वाहा १९ ॐ नमः सर्वरक्षितेभ्यः स्वाहा २० ॐ नमो मारुतेभ्यः स्वाहा २१ ॐ नमो वसुभ्यः स्वाहा २२ ॐ नमोऽश्वेभ्यः स्वाहा २३ ॐ नमो विश्वेभ्यः स्वाहा २४। ततो बहिः परिधिं विधाय चतुःषष्ठिदलानि विधाय ततोऽनुक्रमेण ॐ नमश्चमराय स्वाहा १ ॐ नमो वलये स्वाहा २ ॐ नमो धरणाय स्वाहा ३ ॐ नमो भूतानन्दाय स्वाहा ४ ॐ नमो वेणुदेवाय स्वाहा ५ ॐ नमो वेणुदारिणे स्वाहा ६ ॐ नमो हरिकान्ताय स्वाहा ७ ॐ नमो हरिसहाय स्वाहा ८ ॐ नमोऽग्निशिखाय स्वाहा ९ ॐ नमोऽग्निमानवाय स्वाहा १० ॐ नमः पुण्याय स्वाहा ११

